समर्पणम्

सुभगमकारणबन्धुं
तं सत्साहितीसूत्रधारमधुना।
सत्यव्रतमहमीडे
महितोषसं कविमार्तण्डम् ॥

सविनयम्

मिश्रोऽभिराजराजेन्द्रः
२६.९.९२.

अभिराजराजेन्द्रविरचितम्

# नाट्यपञ्चगव्यम्

युवजनोचितपञ्चलघुरूपकसङ्कलनम्






**वैजयन्त प्रकाशन**

इलाहाबाद

Written by Abhiraj Dr. Rajendra Mishra

# NĀTYAPANCHAGAVYAM

A Collection of five one-act Plays.





Vaijayanta Prakashana

Allahabad

# कविवंशवर्णनम्

## (कविप्रणीतवामनावतरणाख्यमहाकाव्यस्यादिसर्गात् समुद्धृतम्)

अभवदमितशंसः कोऽपि वंशो द्विजानां
शुभचरितनिधानं मञ्जुगोरक्षपुर्याम् ।
रघुपतिशरवार्ये भूप्रदेशे वसन्त—
स्तदनुगतसमाख्यां[1] येऽभजन्पङ्क्तिपूताः ॥१

सुकृतनिचयभूतं गौतमाख्यं सुगोत्रं
प्रवरबहुलशाखा शुक्लमाध्यन्दिनी सा ।
अभवदमृतनेत्री चण्डमुण्डादिहन्त्री
प्रभवनिधनमूलं वंशपूज्या नु तेषाम् ॥२

अथ तदजिरजातः कोऽपि पूतान्तरात्मा
गुणगणमणिमाली भोजराजाभिधानः ।
उपसरयु विहाय ग्रामवासं स्वकीयं
सुवसतिभयाख्यं तीर्थदेशान् प्रतस्थे ॥३

स च नवतनुकान्तिर्निष्ठयातिप्रकृष्टः
व्यवहृतिरमणीयस्सौम्यसौम्योऽतिचिन्त्तः ।
कथमपि विधियोगान्मण्डले जामदग्न्ये
ननु यवनपुराख्ये[2] प्रोषितुं सम्प्रवृत्तः ॥४

तदनघवटुवंशेऽभूत्सुतो भोजराजात्
प्रचुरबलनिकायश्शीतलाख्यस्सभेयः ।
पुरपरिघविशालैर्बाहुमाल्यैर्यदीयैः
सुविहितशुभकृत्यं मन्यतेऽद्यापि लोकः ॥५

---

१. सरयूपारीणा इत्यर्थः । २. जमदग्निपुरं जौनपुरम् इत्यर्थः ।

त्रितयसुतकनिष्ठश्शीतलस्योपकार-
प्रवणमतिविभूतिर्भेषजाचारदक्षः ।
अजनि जगति काशीराम आत्मप्रपूतो
विधिहरिहरदूतस्सूततुल्यः पुराणे ॥६

त्रिसुतसुकृतराशिः काशिरामात्तु जज्ञे
अभवदथ कनीयान् श्रीदुलारो यदीयैः ।
प्रमदगजसमानैर्बाहुशौर्यप्रमाणैः
पितृवनतप्रतीनाञ्चापि भीतिर्विरूढा ॥७

रजनिपतिगुणाग्र्यश्श्रीदुलारस्य सूनुः
समजनि शुभकर्मा कोऽपि धर्मावतारः ।
यदुरसि हरिमूर्तिश्चानने देववाणी
सुमनसि खलु रेमे भूरिभावा भवानी !!८

अभवदखिललोके तत्समाख्याऽमृताङ्गी
ननु युगदिशि रामानन्दमिश्राभिधाना ।
यदधरमधु पायं पायमात्मानमूर्ध्वं
प्रभुचरणनिलीनं भक्तलोकोऽनुमेने !!९

न किमपि तदभीष्टं मानसं वाचिकं वा
प्रविततपुरुषार्थैः कर्मभिर्यन्न सिद्धम् ।
न च तदुदितभव्यं लौकिकं तत्परं वा
प्रयतनपरिणामैर्नैकधा यन्न भुक्तम् !!१०

त्रितनयवरपुञ्जं सोऽत्रिकल्पोऽनुलेभे
धृतजनिमिव पूतं त्रिप्रसादं भवान्याः ।
त्रिगणसुखसमूहञ्चाप्यनेनैव भेजे
परमगतिमथापि स्कन्दमातुः प्रसादात् !!११

स च परममनस्वी तेजसातिप्रगल्भो
धृतनिशितकुठारः क्षात्रधर्मानुरक्तः ।
प्रथम इव बभूव क्षीरसिन्धुप्रमन्थात्
क्षुभितनिखिललोकस्तीव्रहालाहलोघः ॥१२

सुचरितरमणीयोऽपत्यबन्धुप्रलीनः
कृतबुधजनसङ्गोऽभङ्गविद्याविलासी ।
जगति जयति सोऽसौ तातदुर्गाप्रसादः
सुरभुवि विलसन्तं यं सदैव स्मरामि !!१३

नववयसि समग्रैर्मानवीयातिचारै-
र्विधिवदिषुधिकल्पां गन्धयित्वा धरित्रीम् !
अनृणरूपि विधाय ध्यात्मजैरात्मदेहं
हरिचरणशरण्योऽभूत्स षड्विंशतिरथः !!१४

सदुपयमनकेलिं नैमिषीं शङ्कमाना
कुटिलनियतिचक्रं नैरपेक्ष्यञ्च धातुः ।
मुषितविभवमूलाऽभूद्युगस्यानुकूला
तदमलघनलेखा चारुभार्याऽभिराजी !!१५

प्रियविरहकृशाङ्गी त्यक्तकूलापगेव
प्रचलसलिलभङ्गान्सा पुपोषेव पुत्रान् !
विधुरमणवियोगं पार्वणं विस्मरन्ती
सुखयति सुतकल्पांस्तारकानेव रात्रिः !!१६

अथ जलधितरङ्गैश्चण्डखण्डप्रवातै-
स्तरणिरिव विलोलं जीवनं यापयन्ती ।
कथमपि निहताशा सातिदीना ददर्श
श्रितनियतिविकासं जीवनव्योम्नि शुभ्रम् !!१७

रसरसरसखाब्धे हायने विक्रमाणां
हृतजननिविषादो मासि पौषे नु कृष्णे ।
अवतरणमुपेतः पञ्चमेऽह्नि प्रभाते
स्वजनविजयहेतुर्मध्यमस्तत्तनूजः[१] !!१८

चपलकृतिकदम्बे त्वम्बया बालवृत्तौ
प्रवरगुरुसमूहैश्चापि कैशोर्यकाले ।
कुसुमशरविलोले यौवने साधु दृष्टो
महितपदपितृव्यैश्चायमाद्याप्रसादैः !!१९

---

१. सं० १९९९ विक्रमीये पौषमासे कृष्णपक्षे पञ्चम्यां तिथौ प्रभातवेलायां शनिवासरे कवेर्जन्म ।

ध्वज इव सुकृतानां व्योम्नि दोधूयमानः
निखिलविभवपुञ्जं पार्थिवश्चानुयातः ।
प्रयतननिरतोऽभूद्वामनं गातुकामो
विकलविधिरिदानीं पश्य राजेन्द्रमिश्रः ।।२०

कनकधनधनेशो नातिजानाति लौहं
न च सदमृतपायी पातुकामोऽस्ति माध्वीम् ।
हृदयमृदुकुटीरे राजते यस्य नित्यं
धवलवरटवाहा तस्य काव्यैः किमन्यैः ??२१

कलयति न कुरङ्गो वागुरां रागकृष्टः
कुवलयदलगन्धं नापि माद्यद्द्विरेफः ।
चटुलवटुरपीत्थं दोषसिन्धुं स्वकीयं
यदि गणयति नाल्पं कात्र देयोपपत्तिः ??२२

तरलजलधिवीथ्यादित्यमेतुं यतन्ते
ननु कवयितुकामाः साम्प्रतं देववाण्या ।
क्व नृपतिपरिवेशः सोऽद्य हर्षादिकाणां
क्व च विहगगलानुस्यूतगीतं पुराणम् !!२३

तदपि च भवितव्यं सम्भवत्येव सृष्टौ
न बृहदभिनिवेशः क्वापि रुद्धोन्तरायैः ।
सजलधरणिगर्भे सुप्तबीजस्य यद्वत्
प्रभवति ननु रोद्धुं कोऽङ्कुरप्रक्रियां ताम् !!२४

यमपि पुरुषरत्नं शारदा चञ्चला वा
सुतमिव कलयन्ती कीर्तिदानाय मेने ।
नयनलघुविलासप्राञ्जलप्रेरितेन
भवविभवनिकायोऽभूत्स एव क्षणेन !!२५

मृदुलमुरलिकल्पां काव्यशक्तिं स्वकीयाम्
अहमपि ननु जाने छिद्रपर्याकुलाङ्गीम् ।
प्रकटयति यदीयं मूर्च्छनां भङ्गलोलां
न खलु मुरलिशक्तिस्सातु वाण्याः कृपैव !!२६



# पुरस्सरणम्

दुग्धदधिघृतमूत्रगोमयात्मकं प्राक्तनं पञ्चगव्यं सर्वलोकप्रियमिव **नाट्यपञ्चगव्यमिदमभिराजराजेन्द्र**रचितं सर्वथा सहृदयहृदयहारि ! सारासारविचारविचक्षणा गुणैकपक्षपातिनो मनीषिणो निष्पक्षदृष्टयो मसृणं काव्यमौक्तिकमभिनवमिदमवश्यमेव ग्रैवेयकत्वेन धारयिष्यन्तीत्यत्र सन्देहलेशोऽपि मानसे न विद्यते। स्वीयेन काव्यसौष्ठवेन भावसौकुमार्येण च, स्वीयया माध्वीकमधुरया सरसरमणीयया च भावाववोधनक्षमया भाषया काव्यरसिकानां मानसानि नूतनया काव्यरचनया हरन्नभिनवो**ऽभिराजराजेन्द्राख्यः** कविः 'समेषामस्माकं काव्यमाधुरीमरन्दरसज्ञानामाशिषः शुभाशंसाश्चापेक्षते। तस्मै प्रभूतं वितीर्यन्त एताः, साधुवादाश्चापि !!

**• प्रो० डाक्टरआद्याप्रसादमिश्रः**
भूतपूर्वसंस्कृतविभागाध्यक्षः
प्रयागविश्वविद्यालयीयः।

**राजेन्द्रमिश्राभिधः** मे प्रियशिष्यचरः **नाट्यपञ्चगव्याख्यां** स्वकीयां वालकृतिं विदुषां पुरस्तात् उपस्थापयन् ममाशीर्वादं समीहते इति ममापि प्रमोदावसरः ! यतो न केवलमयं स्वकाले मूर्धाभिषिक्तपदं छात्रनिचयेऽलङ्करोतिस्म अपितु प्राप्य प्राध्यापकपदं स्वपाठनकौशलेन छात्राणां मनांस्यावर्जयन् अभिनयपटुः मधुरस्वरः काव्यप्रणयननिपुणोऽपि वर्तते।

छात्रावस्थाकाले प्रणीतमिदं **नाट्यपंचगव्यं** भविष्यत्प्रतिभां कवित्वसंस्कारं च प्रथयति। अनेन **'पंचगव्येन'** संस्कृतविद्यानुरागिणः स्वान्तःकरणकालुष्यम् अपनीय धवलपूतात्मानः भविष्यन्तीत्याशासानः शुभाकांक्षाततीर्वितरामि !!

**• पण्डितश्रीसरस्वतीप्रसादचतुर्वेदी**
भूतपूर्वसंस्कृतविभागाध्यक्षः
प्रयागविश्वविद्यालयीयः।

**श्रीराजेन्द्रमिश्रविरचितनाट्यपञ्चगव्यस्य** रसास्वादनेन परमा आनन्दमानसमावहते मे मनः । आशासे, सर्वे संस्कृतविद्वांसश्छात्राश्च इदं पठित्वाऽभि नीतञ्च दृष्ट्वा प्रमुदिताः भविष्यन्ति । कृतिवरस्य कृतेश्च चिरायुष्यं कामये !

**❋ डाक्टर श्रीसूर्यकान्तः**
काशी-अलीगढ़-कुरुक्षेत्रस्थविश्वविद्यालयेषु
भूतपूर्वसंस्कृतविभागाध्यक्षः ।

श्रीमतः **राजेन्द्रमिश्रशर्मणः नाट्यपञ्चगव्यं** समाघ्राय चित्तं गद्गदायते भाषासौष्ठवेन भावचातुर्येण विषयाणां सर्वतोगत्या च श्रीमान् नाट्यजगति प्रतिष्ठा महंतीति मे विश्वासः । नैरन्तर्येण एवंविधया नाट्यसेवया सरस्वती श्रुतिमहती श्रीमत सपक्षे महीयताम् इति सानन्दं प्रमाणीकरोति ।

**● डा० सिद्धेश्वरभट्टाचार्यः**
भूतपूर्वसंस्कृतविभागाध्यक्षः
काशीहिन्दूविश्वविद्यालयीय, ।

---

# पञ्चगव्यमधिकृत्य !

दुग्धदधिघृतमूत्रगोमयानामेकीकरणमेव पञ्चगव्यं भवति तच्च निखिलदुरितामङ्गलापनोदनक्षमम् अमृतोपमं पवित्रतमञ्चोररीक्रियते लोकवेदज्ञैर्जनैः । यद्यपि दुग्धादीनां सर्वेषां तत्त्वानामुत्पत्तिर्धेनोरेव सञ्जायते तथापि तेषां प्रकृतिषु महदन्तरं गुणव्यतिक्रमणञ्चावलोक्यते । अनेन एतदुक्तं भवति यत् विशकलनसङ्कलनयोर्गुणाः परस्परं विभिन्दन्ति न च समरेखतामुपयान्ति । विविधप्रकृतिमतां परश्शतानां सलिलस्रोतसां कदम्बकं गाङ्गं जलमेवात्र प्रमाणम् ।

मदीयं नाट्यपञ्चगव्यमपि ऐदम्पर्यं भजते । अत्रापि समेषां रूपकसमूहानाम् अहमेवैकोऽस्मि प्रभवमूलम् ! सङ्कलितानि लघुरूपकाणि च भाणप्रहसनैकाङ्किप्रकृतित्वेन परस्परं विभिन्दन्ति । एवम्भूतेऽपि तेषां सर्वेषामेकीकरणं सहृदयहृदयाह्लादननिपुणं काव्यरसमाधुर्यस्य च कादाचित्कं किञ्चिदंशदायकं भविष्यति इति कवियशःप्रार्थिनो मूढबुद्धेर्ममास्ति शुभाशंसा ।

इमानि पञ्चलघुरूपकाणि मया नैकधा लिखितानि प्रत्युत खिस्तीयपञ्चषष्ट्युत्तरोनविंशशतकात् समारभ्य सप्तत्युत्तरोनविंशशतकं यावत् एषां प्रणयनकालो वरीवर्ति । अथच प्रायेण प्रतिवर्षमेषां प्रत्येकं प्रयागविश्वविद्यालयीयसंस्कृतविभागमुखपत्रिकायां सुरभारत्यभिधायां प्राकाश्यमुपगतम् । अनेन प्रणयनसंवत्सरानुक्रमेण एकतस्तु उत्तरोत्तरसरसकाव्यबन्धप्रयतनं प्रकटयितुकामस्य लेखकस्य मृदुतरकल्पनासोपानं स्फुटीभवति अपरतश्च संस्कृतलेखनघटितप्रमादानामपचयनम् अपि दृष्टिगोचरं स्यादित्युभयविधसन्तोषोऽस्माकम् ।

स्वदोषपरम्परां विजानन्नपि तद्वेष्टनान्तरालभूतान् ईषद्गुणान् प्रकाशयितुं नितरां समीहे इति पौगण्डस्थितस्यापि मम बालोचितचापलमेव । कज्जलोद्वमनभयेन किं शिखावलो दीपः प्रकाशनमुपेक्षते यद्वा हरीतकीसेवनमेव कषायत्वेन तद्गुणज्ञैरगृहीयते ? अन्यच्च, भवेत् पण्डितमानिनां कृते तादृशं भयं ये खलु स्वकीयं निखिलवेष्टितजातं स्फटिकमयमेव द्रष्टुं प्रयतन्ते । किम्पुनर्मम सततोपसेवनाधिगतवाक्कणुकस्य ! संस्कृतज्ञानां लघुतमोऽहं कामं लघूत्तमो भवितुं समीहे परन्तु महतां महत्त्वं न मम लक्ष्यमिति निश्चप्रचमेव ।

इदं रूपकसङ्कलनं मदीयं प्रथमं संस्कृतप्रकाशनम् । एवं हि यद्येतत्कृते विदुषां देवभाषानुरागिणामन्येषां वा पौरापौरपण्डितानां स्खलनसङ्केतपुरस्सरम् आशीर्वचः साधुवादं वोररीकरिष्यामि तदेव मे सुमहत्पारितोषिकं भविष्यति इत्यत्र सन्देहलेशो नास्ति ।

नाट्यसङ्कलनमिदम् अधुनातनानां सुकुमारमतीनां सारल्यैकपक्षपातिनां संस्कृतज्ञानाम् अभिरुचितोषणायैव मया प्रणीतम् अतएव पाणिनीयसन्धिविधानोल्लङ्घनाद्दरीदृश्यमाणा मन्निरङ्कुशतापि सर्वैः पाठकतल्लजैः क्षन्तव्येति बद्धा सम्प्रार्थ्यते ।

गुरुचरणैः सहोपाध्यायैः मित्रवर्यैः पुरस्सारयितृभिश्चान्यैः स्वप्रशंसकैस्सन्ततमेव समुत्थापितोऽस्मि । तेषां सर्वेषां पुरतो वानीरवृत्त्या सन्नतोऽस्मि विशेषेण गुरुचरणानां वैदुष्यकान्त्यैव विफलीकृतात्मवंशसूचकशुक्लपदवीनां डाक्टरश्रीमच्चण्डिकाप्रसादशुक्लानां पण्डितवर्य्यश्रीप्रभातशास्त्रिणां पण्डितश्रीतारिणीशझामहोदयानाम् आचार्यश्रीचन्द्रभानुत्रिपाठिमहाभागानां गुरुवर्य्यश्रीसन्तनारायणश्रीवास्तव्यानां स्वाग्रजभूतानां वाराणसीस्थडाक्टरश्रीरेवाप्रसादद्विवेदिनां ज्ञानपुरस्थडाक्टरश्रीमनोराजयादवानां च नियुतमिकृतं जानामि यैरस्मिन् प्रकाशने बहुविधसाहाय्यं प्रदत्तम् । स्वशिष्यप्रवरं साम्प्रतञ्च सहोपाध्यायपदभाजं श्रीरमाशंकरमिश्रं मदनुजकल्पं हमीरपुरस्थराजकीयमाध्यमिकविद्यालयीयसंस्कृतप्रवक्तारमायुष्मन्तं श्रीदयानन्दमिश्रञ्च शुभाशिषा संयोजयामि मुद्रणप्रयतनार्थम् ।

शुभाशीर्वचनवितरणार्थं विद्वत्तल्लजानां आचार्यश्रीसरस्वतीप्रसादचतुर्वेदिमहाभागानां डाक्टरश्रीसूर्यकान्तमहोदयानां डाक्टरश्रीसिद्धेश्वरभट्टाचार्यमहोदयानां वात्सल्यं कृतज्ञभावनया स्वीकरोमि । अन्ते च स्वकाव्यजीवितसर्वस्वं दिवङ्गतं तातचरणे जनकायमानं पूज्यपितृव्यचरणं श्रीमदाद्याप्रसादमिश्रमहाभागं सर्वतोऽभिवन्दयत्पुरस्सारणेनैव मत्काव्यसरणिर्मंहीयते ।

आषाढपूर्णिमा
सं २०२८ विक्रमीयः

सोऽहमस्मि भवदाशिषामेषी
मिश्रोऽभिराजराजेन्द्रः
प्रयागविश्वविद्यालयीयः

## Something again !

Now a days every Sanskritist is bitterly facing the common misunderstanding caused by those persons who declare it 'the dead language.' Last year, I personally found a very responsible Hindi litterateur at Bhopal, having the same interpretation. His wretched view-point which was representing the standard of his un-Indianised mental faculty also, created an unbearable mental agony in me. But very politely I told him that Sanskrit is not a dead language. On the other hand it is just like the great mountain Himalaya which transforms its solid personility and flows itself in the shape of the god-rivers Ganga and Yamuna. Sanskrit is the Gangotri, the birth-place of all Indian languages in the modern era, barring a few. But they also are absolutely indebted to Sanskrit from the vacabulary point of viw.

The so-called critics of the Sanskrit language have acquired a negative approach. Their criticism amounts the despair, the absence of knowledge, the faulty mental convulsion and the incapability of any new learning owned by them. But in the words of the father of the nation Bapuji we ( the toads ) under the harrow of their eriticism know where it pinches us.

I would like to quote here the Honourable Sanskrit scholar of the day Em. Professor Scharpe of Belgium, who is the greatest authority on the Kalidasan literature in the modern age. He writes to me in one of his letters dated 28th January 1983 :

"Indeed as much as Latin for European philologists, Classical Sanskrit ought to stand as a living language for those who are striving to study it as thoroughly as possible."

Commenting on some shlokas composed by me in his honour, revered Professor Scharpe, in his letter dated 27th July 1983, writes again :

"I have perused your Sanskrit poems and it was a pleasure to me to learn from them how beautifully and fluently the Sanskrit language is still written in India at this time and how devotedly and ably you are giving up yourself to this, yet difficult, task."

Now the peculiar difference between the Indian and foreign thinking, in the context of Sanskrit, becomes undoubtedly clear. We are unable to recognize our own cultural heritage and the sacred legacy of our fore-fathers, the Rishis, the Munis and the great Krantadarshi Kavis : स्रजमपि शिरस्यन्धो न्यस्तां क्षिपत्यहिशङ्कया !

Natyapanchagavyam, the first collection of my early written five one-act plays is really a mile-stone in my Saraswatayatra. Now I have become a chain-travellor of that Kavya-Marga, but the starting point's recollection gives me more pleasure. The second edition of the same collection is now put in to the touchy hands of the Sanskrit readers.

I feel highly and sincerly obliged to the Sanskrit scholars, here and abroad, my contemperory literary friends and students who have unhesitatingly appreciated my poetic creativity.

सन्त्येव हन्त ! सरला मनुजाः कियन्तो
जानन्ति मद्विलपनं यदमी कवित्वम् !!

Rajendra Mishra

# कविसम्मेलनम्

## पात्रपरिचयः

सूत्रधारः ( उद्घोषकः )
कालिदासः (प्रथमकविः)
अश्वघोषः (द्वितीयकविः)
शूद्रकः (तृतीयकविः)
भवभूतिः (चतुर्थकविः)
बाणभट्टः (पञ्चमकविः)
माघः (षष्ठकविः)
जयदेवः (सप्तमकविः)
जगन्नाथः (अष्टमकविः)
अभिराजः (नवमकविः)

[रचनाकालः १९६५ ई०]

प्रस्तुत एकाङ्की 'संस्कृत-कविदरबार' का एक दृश्य प्रस्तुत करता है। कविकुल-गुरु कालिदास, अश्वघोष, शूद्रक, भवभूति, बाणभट्ट, माघ, जयदेव तथा पण्डितराज जगन्नाथ इसके पात्र हैं। इन कवियों का समय शकारि विक्रमादित्य (ई० पू० प्रथम शती) के शासनकाल से लेकर मुगल शाहंशाह शाहजहाँ (१७वीं शती ई०) के शासनकाल तक परिव्याप्त है। यह तथ्य यथाशक्ति ध्यान में रखा गया है कि कवियों के संवादों अथवा सूत्रधार की नेपथ्यघोषणाओं से तत्तत्कवियों की भाषा-शैली पर प्रकाश पड़ सके। साथ ही साथ यथोचित काव्यमाधुरी की सृष्टि भी हो। इस एकांङ्की का अभिनय-स्थान प्रयागविश्वविद्यालयीय नाट्यशाला तथा काल पौष-रात्रि है।

प्रस्तुत एकाङ्की का रचनाकार स्वयं इस कविसम्मेलन का अन्तिम कवि है, यह एक उल्लेखनीय तथ्य है।

# कविसम्मेलनम्

( विश्वविद्यालयीयनाट्यशालामलङ्कुर्वाणाः सभ्याः सामाजिकाः समुत्सुका इव विराजन्ते । सन्ध्यामतीत्य प्रथमप्रहरवती पौषरात्रिश्च वर्तते । नेपथ्येऽपि मनोरमा मधुरा सङ्गीतलहरी श्रूयते )

( ततः प्रविशति सुवेषः सूत्रधारः )

सूत्रधारः : धृता वृन्दारण्ये युवजनशरण्येऽपि हरिणा
पतत्ताटङ्काङ्गी नवकिसलयाङ्गी सुमधुरा ।
विमुञ्चेतिव्रीडावनततनुराधा रतियुता
मदीयव्याहारं कविविभवसारं कलयतु ॥१

अपि च

यदीयकृपया शठोऽपि सततं प्रयाति सुमतिं विहाय कुमतिम् ।
शुभां सुवरदां मदेकसुखदां नमामि च सरस्वतीं सुवदनाम् ॥२

त्वमेव जननी त्वमेव जनकस्त्वमेव भगिनी त्वमेव हितकः ।
त्वमेव निखिलं मदीयसुधनं विधेहि कुशलं त्वमेव वरदे ॥३

( परिक्रम्य सस्मितम् )

विलासविधुराः स्वभावमधुराः प्रपञ्चचतुराः सहासवदनाः ।
भवे सहृदया मरालगतयः जयन्ति सततं न कैरनुगताः ॥४

( इति पुष्पाञ्जलिं विकीर्य पुरतश्च कतिचित् पदानि गत्वा )

अहो नूनमद्यास्माकं महत्सौभाग्यम् । भो भो विद्वत्तल्लजा मन्नूतनप्रयोगदर्शनलालसाः पारिषदाः सर्वे भवन्तो निश्चप्रचमेव धन्यवादार्हाः यतोहि रोमोत्कम्पकारिण्यामप्यस्यां पौषरजन्यामत्रागत्य मदुत्साहं वर्द्धितवन्तः । तन्मयापि साञ्जलिपुटं किञ्चिद् विज्ञाप्यते स्वप्रयोगविषयमधिकृत्य ।

 

अकालिदासात् पण्डितराजजगन्नाथपर्यन्तानां कवीन्द्राणां युगपद् सम्मेलनमुपस्थापयितुकामेन मया यत्साहसमनुष्ठितं तत्तु सर्वं अपूर्वमेव वर्तते इत्यहमाशङ्के । तथापि सहृदयजगति तस्य सभाजनं भविष्यतीत्यत्र सन्देहलेशोऽपि नास्ति । यतः कल्पनयैव कवि कवितयैव प्रीतिः प्रीत्यैव रीतिः रीत्यैव चानन्दः प्राप्यते । अतए इयमेव मदीयाभ्यर्थना यत् सावधानं साक्षात् कवीन्द्रमुखेभ्य ए निस्सरन्तीः तत्तत्समयानुसारिदेशकालकारणादिलसिताः पीयूषवा शृण्वन्तु भवन्तः, इत्युक्त्वा मया विरम्यते ।

( इति निष्क्रान्तः )

( ततः प्रविशति पीतदुकूलालंकृतः परमरमणीयाकृतिः कविकुलगु कालिदासः )

कालिदासः : अहो महच्चित्रमिदं यत् स्वस्मिन्नेव महाकाव्ये रघुवंशे व मञ्जुलयामुनगाङ्गसङ्गमविलसितं प्रयागनिगममद्य सहस्रद्वयवर्षानन्त मवलोक्य मनो मे भृशं कुतुकमुपयाति । यद्वशीभूय मया अभिज्ञा शाकुन्तलप्रभृतिकाव्यादीनां प्रणयनं कृतं तानेव हेतूनद्य संस्मृत्य न ज कथं मे चैतसिकी पीडा सञ्जायते । विजयते सोऽद्यापि शकारिर्महा विक्रमादित्यस्तन्नगरी उज्जयिनी यत्राद्यापि देवाधिदेवस्य महाका श्वरस्य घोरघण्टानादः । हन्त ! स एव रामगिरिः सैव विदिशा त देवतात्मकं हिमालयक्षेत्रम् । भोः पारिषदाः ! पश्यन्तु मदीयं वैव यदनपेक्षितापि वाणी स्वदेशवर्णनं प्रति माम् ( इत्यर्धोक्त एव स्ने गादीभूय )

हिमालयालङ्कृतरम्यभालः पयोधिसुक्षालितपादपद्मः ।
सुनीतिविज्ञानकलावलम्बी जयत्यहो कोऽपि मदीयदेशः ।।५

अपि च—

त्रैलोक्यभूमिमधुरा सुखदा मनोज्ञा काशीप्रयागमथुराविदिशादियोनिः
मन्दाकिनीधवलतोयधरा विशाला धन्येयमस्ति सुरवन्दितदेशभूमिः

किञ्च—

 

वेदान्तयोगजननी सुरवाग्विलासा दत्तानयैव जगते नवशिल्पशिक्षा ।
ज्ञानामृतस्य चषकं सततं निपीय नूनं बभूव धरणीयमवाप्तकामा ॥७

अहो तदेवेदं भारतवर्षं यत्र प्रकृतिसीमन्तिन्याः विविधहावभावानुकारिणः ऋतून् सन्दृश्य मया ऋतुसंहारनामकं काव्यं प्रणीतम् । हन्त ! दर्शं दर्शमिदानीन्तनं प्रचण्डशीतसञ्चारं तदेव स्मरामि । सम्प्रति हि—

कम्पं विधाय हृदयेऽखिलभावभाजां दग्ध्वा निकाममधुना हरिताभशस्यम् ।
सत्यं विभाति कुलटेव निजप्रयाणे दुर्दान्तशीतलहरीयमतिप्रचण्डा ॥८

किन्तु इदानीन्तनी सन्ध्यापि तात्कालिकी एव प्रतिभाति । तथा हि—

नवीकृता सान्द्रतुषारबिन्दुभिः सभाजिता मञ्जुसरोजकुड्मलैः ।
विरामरामेव विरूढरागिणी धरामलङ्कृत्य विभाति कोमला ॥९

भो विश्वविद्यालयीयप्राचार्यवर्य्याः सहृदयाश्च ! यन्महत्त्वं मह्यं प्रदत्तं भवद्भिः तस्य तु कल्पनापि स्वयुगे नासीत् । यदा प्रथममेव काव्यप्रणयनार्थं मया धृता लेखनी तदा पूर्वभूतानां भाससौमिल्लकविपुत्रादीनां कविपुङ्गवानां संस्मरणेन मनसि कश्चिद् वेपथुः सञ्जातः ।

( ईषद् विहस्य )

यद्यपि जानामि यत् अस्मत्पौर्वापर्यविषयेऽद्यापि भवतां विवादो वर्तते । तथापि मद्वचसि विश्वस्य जानन्तु यदश्वघोषशूद्रकाद्यो मत्परवर्तिन एव विद्यन्ते । मेघदूते मदनुभूतिं पश्यन्तु भवन्तः रघुवंशे मदादर्शञ्च । यौवने तु मदीया एकैवाकाङ्क्षासीत् । प्रस्तौमि तां स्वश्लोकमुखेनैव—

न विद्यते क्वापि मदीयभावना विहाय वाण्यङ्घ्रियुगं सुखावहम् ।
मनोरमा दीपशिखेव रश्मिभिः सदा सुकाव्यैः सुखयानि भूतलम् ॥१०

साप्याकाङ्क्षा प्राप्योन्नतिपराकाष्ठां पूर्तिमुपयाता । हन्त ! कृतकृत्योऽस्मि साम्प्रतम् !! तद् गच्छामि गोलोकमेव । स्वस्ति भारताय !

( इति निष्क्रान्तः । नेपथ्ये )

काव्यप्रकाशपरिपूतनिकामरम्यान् ग्रन्थान् प्रणीय कृतवान्भुवनोपकारम्।
वन्दे तमेव सुरवाक्सुविलासहासं साहित्यवारिधिसुमौक्तिककालिदासम्।।११

अपि च

मासृण्यं कान्तकान्तं विधुकरनिकरप्राणकल्पातिनव्यं
माङ्गल्यं शान्तशान्तं दुरितविनशनप्रौढ़कोपातिदिव्यम्!
किञ्चास्वादं समेषां मधुरजनिवतामेक एव प्रतन्वन्
आकल्पान्तं जयी स्यादनघनवयशाश्चारुवाक्कालिदासः ।।१२

भोः परिषदाः! समाहितचेतसो भवत। सम्प्रति प्रविशत्यधिरङ्गमञ्चम् आचार्यः सुवर्णाक्षीसूनुः भदन्ताश्वघोषः!

(ततः प्रविशति कषायवस्त्रावृतश्चीवरांसः पलितकेशोऽश्वघोषः)

अश्वघोषः : अहो कालप्रभावः! भोः पारिषदाः! स्वकीय एव देशे अधार्मिको[१] भूत्वा पुनरागतोऽस्मि। क्वाद्य ते वलभीसारनाथजगद्दलकौशाम्बीस्थिताः बौद्धविहाराः? क्वाद्य ते भगवतस्तथागतस्य सदुपदेशाः यत्प्रचारार्थं सत्यपि सुकविकालिदासे मया संस्कृतभाषामाश्रित्य स्वग्रन्थाः विरचिताः? तथापि हृदि परमसन्तोषो जायते स्वदेशमवलोक्य। इदमपि शोभनं विद्याभवनं विलोक्य नूनमस्मत्तक्षशिलापरितापः शमनङ्गतः। तथाहि—

प्रवहति जलधारा प्राणपीयूषदात्री द्रुतमिव दिशि भानोर्देवधुन्याः सदैव।
हरिहरविधिभूमौ तीर्थराजे प्रयागे विलसति कमनीयो विश्वविद्यालयोऽयम् ।।१३

(अञ्जलिमाबध्य)

अतः परं मत्तः श्रोतव्यं नास्ति। अवशिष्टवृत्ताय महाराजं शूद्रकं प्रतीक्षन्ताम्।

(इति निष्क्रान्तः)

---

१. कवेर्बौद्धमतावलम्बित्वेन साम्प्रतञ्च भारतवर्षे तन्नाममात्रशेषत्वेन अधार्मिकशब्दस्यात्र प्रयोगो विहितः। न धार्मिक इत्यधार्मिकः।

 

(ततः प्रविशति राजवेषधारी मृच्छकटिकपुस्तकमुद्वहन् कविः शूद्रकः)

शूद्रकः : (सस्मितम्)

श्रोतृवृन्द ! सूत्रधारमहोदयेन भृशमभ्यर्थ्यमानस्यापि मे स्वर्गं विहाय प्रयागमागन्तुम् उत्साहो नासीत् तथापि मृच्छकटिकपुष्पिकायां स्वमृत्युविषयकपद्येषु भवतामविश्वासं दर्शं दर्शं मनो मे स्वकाल-निर्णयाय नितरां सोत्कं सञ्जातम् । स्वकालविषये मदीयं यत्किञ्चिद् वाचिकमस्ति तत्तु ग्रन्थ एव मया निबद्धम् अतीन्द्रियज्ञानबलेन ।

अहो यो बौद्धधर्मस्तस्मिन्काले मया स्खलन्निव परिलक्षितः स एवाधुना नाममात्रशेषः ? परिवर्तनं हि नाम महज्जागतिकं तत्त्वम् । साम्प्रतिकं भारतवर्षं तु सर्वथा परिवर्तितमेव पश्यामि । किन्तु यस्मिन् भ्रष्टाचारोन्मूलने मयापि साफल्यं न प्राप्तं दैत्याकारं तदेव दूरीकर्तुं वर्तमानगृहमन्त्रिणं गुलजारीलालनन्दामहाभागमपि असफलमेव पश्यामि इति महत्साम्यं युगद्वये !

(सर्वे हसन्ति)

पारिषदाः रुचिकरोऽयं हासो भवतामेव न मम । देव ! विधवानां दशा तु अद्यापि तादृश्येव—

वसनं प्रकटितदैन्यं विरहितकान्तिः कपोलयुगमश्रीः ।
विधवैव जगति दीना धनजनहीना कथं हि सञ्जाता ॥१४

किं कथयामि भोः ? साम्प्रतिके भारते वर्षे तु न कोऽपि पालकः न कोऽप्यार्यकः नच शर्विलकः । चारुदत्तानां पुनः का कथा ? (सोल्लुण्ठम्) आम् केवलमेकमेव शकारबाहुल्यं भृशं पश्यामि भारते । ( सहृदयेष्वट्टहासः ) भरतवाक्येऽपि यत्किञ्चिदीहितं मया सर्वथा तत्प्रतीपमेव पश्यामि । तथाहि— सस्यविहीना वसुमती । साम्प्रतं तु धेनव एव तावन्न सन्ति क्षीरिणीनां पुनः का कथा ? तथापि कामये—

शूरा भवन्तु शिशवः सुधियश्च धीरा वृद्धिं प्रयातु नववर्षकमण्डलीयम् ।
गङ्गातरङ्गरमणीयपवित्रमौलिः भूयोऽप्यहो विजयतां सुखदप्रयागः ॥१५

(इति निष्क्रान्तः)

सूत्रधारः : बन्धवः ! सज्जीकुरुत लोचनद्वयम् । प्रविशत्ययं नीलकण्ठोपनामा महाकविः भवभूतिः रचयितोत्तररामचरितस्य !!

(सहृदयेषु महान् हर्षध्वनिः)

भवभूतिः : (प्रविश्य) अलमलमेतावताभिनन्दनेन । भोः सज्जनाः ! सर्वथा प्रीतोऽयन्ते भवभूतिः । किन्तु एकमेव कष्टं यदस्वस्थां मातरं स्वर्गे एकाकिनीं परित्यज्यात्रागतोऽस्मि । अतः चिराय स्थातुमत्र न प्रभवामि । माऽत्र भवतामरुचिःस्यात् । यतः,

विरुद्धापि क्रुद्धा स्तनमधुसुधां या वपुषि मे
निषिच्य प्रत्यङ्गं प्रतिपलमहो वर्द्धितवती ।
विषण्णे मालिन्यं मयि सुखयुते सौख्यमभजत्
प्रकृष्टं मेऽभीष्टं भवतु जननी हन्त न कथम् ॥१६

(अञ्जलिं बद्ध्वा)

तदनुजानीत मां सुरपुरगमनाय ।

(इति निष्क्रान्तः । नेपथ्ये गीयते)

तीर्थपतिर्जयतादभिरामो नृपतिपतिर्जयतादविरामः ।
भुवि जयतादमृतं विभ्राणः कविकुलकुमुदकलाधरबाणः ॥१७

चण्डी जयतु जयतु तच्छतकं हर्षो जयतु जयतु तच्चरितम्
कादम्बरीकथामृततत्त्वं जयतु जयतु भुवि बाणकवित्वम् ॥१८

(ततः प्रविशति राजकविवेषधरस्ताम्बूलमुखो बाणभट्टः)

बाणभट्टः : अहो धन्योऽयं शतशतदुरितापनोदनोपायभूतप्रभूतपूतपुण्यकर्मसम्भारोल्लसितप्रथितशरीरभाक्सुरनरमुनिगन्धर्वकिन्नरसमूहसेवितसलिलय प्रचण्डकापिलाग्निभस्मीभूतषष्टिसहस्रपूर्ववंश्यभूपालनिकुरम्बालम्बमअ मुक्त्यर्थावतारितभगीरथमहीपालानुसारिण्या त्रिपथगया रिङ्गत्त

ङ्गया गङ्गया कृष्णस्पर्शादसितया यमुनया च परिवृतः प्रयागः यत्र (इत्यर्धोक्ते)

सूत्रधारः : भोः पारिषदाः ! पश्यन्तु भवन्तस्तावद्भुजङ्गस्य वाक्कौशलम् !! अद्यापि पाञ्चाली रीतिः न परित्यज्यतेऽनेन ।

(महान् कलरवः)

बाणभट्टः : सहृदयवृन्द ! शैलीविषये तु न मदीया कापि त्रुटिः । काव्यरचनादयस्तु देशकालमेवानुसरन्ति । मद्युगे तु ईदृश्येव रचना सापेक्षाऽभूत् यस्माद्धि भाषणेऽपि सा प्रभवति । कादम्बरी तु मया स्वदेशेऽपूर्णैव परित्यक्ता इति मच्चेतसि महती वेदना जायते । ममात्मजेन पुलिन्देन मय्युपरते कृतं यत्किञ्चित् । कामं तद्ग्रन्थपूरणेऽलं स्यात् किन्तु मदाकाङ्क्षां पूरयितुं सर्वथाक्षममेव । हर्षचरितस्य पुनः का कथा ? (इत्यश्रूणि प्रमृज्य)

सूत्रधारः : महाकवे ! अतः परं श्रोतुं सोढुं वा न वयं समर्थाः ।

(इत्यङ्कपाल्यां प्रगृह्य प्रयाति)

सूत्रधारः : (पुनः प्रविश्य) दर्शकवृन्द !

चण्डांशुभिर्निखिलमेव भवं प्रदाह्य बिम्बः प्रयाति तरणेर्दिशि पश्चिमायाम् !
प्राच्यां निशाकृदुदयाचलचूडचुम्बी माद्यन्नहो निखिललोकमुदेति रम्यम्॥१९

(सर्वे साश्चर्यं प्राच्यां पश्यन्ति महाकविमाघञ्च रङ्गमञ्चे दृष्ट्वा सकरतालं सभाजयन्ति)

माघः : भोः सामाजिकाः भारवेरनुपस्थितौ किं करोतु माघः ? अद्यात्रागत्य तदेव युगं स्मारं स्मारं मे कौतूहलं सञ्जायते । यदि लोके सकिरातार्जुनीयो भारविर्नाभविष्यत् तर्हि सशिशुपालवधस्य माघस्यापि कापि सम्भावना नासीत् । भवतु, समोदं प्रयागं दृष्ट्वा सकलमेव भारतदेशं समोदमिव पश्यामि ।

न तद्वेश्म यत्रानिशं नास्ति नादो न तन्नादकर्मानिशं मुन्न यत्र ।
युवा कोऽपि नास्ति प्रहृष्टो न योऽद्य न बालैव कापि प्रहृष्टा न याऽद्य ॥२०

 

क्वचित्कीर्तनं वन्दनं वाद्यनूनं क्वचित्पुष्कलं रम्यझाङ्कारि गीतम् ।
सनृत्यं चतुःशालकं क्वापि रम्यं विभाति क्वचिच्चारुदीपालिमाला ॥ २१

अपि च—

धरा सावलेपं हसत्यद्य सस्यैः वियद्याति गोविन्दसोदर्यताञ्च ।
तुरङ्गा विहङ्गाः प्लवङ्गा भुजङ्गाः कुरङ्गाः सगङ्गा मुदं यान्ति सर्वे ॥२२

(इत्युक्त्वा निष्क्रान्तः । नेपथ्ये )

अहोऽनुप्रासरचनाचातुरी ! विजयतेतरां महाकविर्घण्टामाघः !!

( वसन्तावतारं गायन् प्रविशति ततः महाकविः जयदेवः )

गृहवनपुञ्जे सघननिकुञ्जे प्रतिदिशमिव विलसन्तम् !
भुवि विहरन्तं मधु रसयन्तं कलयत सुखदवसन्तम् !!
रौति पिकोऽपि सपुष्परसाले
को न भवति मधुरोऽस्मिन्काले
जनयति चेतसि विलसितरेतसि मन्मथमहोतिदुरन्तम् !!
किसलयनिवहे भ्रमरविलसितम्
स्फुटमनुसृत्य सकलकलरणितम्
हृदि परितोषो भवति विशेषो वातमवाप्य वहन्तम् !!
यामुनगाङ्गे पुरप्रयागे
बुधजनचेतसि सत्यनुरागे
मदिदं गीतं भवतु सुनीतं कल्याणयवतु पठन्तम् ॥२३
(इति गायन्नेव निष्क्रान्तः)

सूत्रधारः : अहो मधुरकोमलकान्तपदावलीं श्रावयन्नेव निष्क्रान्तो महाकविः जयदेवः ? पारिषदाः दृष्टं श्रुतञ्च भवद्भिः कृष्णानुरागिणः विस्मृतलोकस्य च कवीन्द्रस्य काकलीकदम्बकम् ?

(सस्वरपरिवर्तनम्)

अधुना कवित्वसाम्राज्याधिराजं पण्डितराजमवलोकयन्तु भवन्तः यमधिकृत्य प्ररोचनेयमद्यापि सहृदयैर्गीयते ।

मधुरं गगनं मधुरं कुसुमं धरणी मधुरा भ्रमरी मधुरा
मधुरा मधुमाधवमासकथा क्षणदा रतिदा सुखदा मधुरा !
निखिलं नवसम्बलदं मधुरं जगति प्रथितं करुणायतनम्
ननु पण्डितराजकृते मधुरं विमलं यवनीरमणीवदनम् ॥२४

(ततः प्रविशति राजवेषालङ्कृतस्ताम्बूलपूरितमुखः पण्डितराजो जगन्नाथः)

पण्डितराजः : वियति भान्ति यथा सिततारकाः पुनरवाप्य सखोज्झिगते घने ।
विजयतां सततं हि तथा सखे ! न इदमद्यतनं नवमेलनम् ॥२५
समागताः बन्धवः !

समायाते पौषे नलिनवनिकामेव सततं
द्विरेफाः सेवन्ते मधुरमकरन्दप्रणयिनः ।
हसन्तीमाश्रित्य प्रशमितकुटीरे सुखकरे
सुवृत्तं शृण्वन्ती नयति जनता शीतरजनीम् ॥२६

अहो ईदृशि कालेऽपि समागताः काव्यश्रवणार्थं भवन्तो नूनमेव मम प्रियाः । यत्किमपि मया रसगङ्गाधरेऽन्येषु च काव्येषु सयत्नमुपनिबद्धं तत्तु भवतामौरसं स्नेहमवाप्य बभूव सार्थकमिति मे परमसन्तोषः । केवलं मत्प्रणीतमन्योक्तिकाव्यमेव सम्प्रत्यपि यथार्थस्थितिं न प्राप इति मदीया महती चिन्ता ।

(सस्मितम्) किन्तु भोः प्राचार्यवर्याः ! भवन्मुखद्योतेन आशास्यते मया यच्छीघ्रमेव भवतां कोऽप्यन्तेवासी (राजेन्द्राभिधः) लब्धावसरः मत्साहित्यमनुसन्धाय मत्प्रीतिं[1] संवर्धयिष्यति स्वर्गेऽपि च निवसन्तं पण्डितराजं मां परितोषयिष्यति । किमधिकम् ? अस्मिन् विषये तु कृतज्ञता मया स्वीकर्त्तव्यैव । यतः—

कृतज्ञता यैर्न खलु प्रकाश्यते जयन्ति ते केऽपि पिकानुकारिणः ।
रुचिं समादाय तथा हि भास्कराद् विधुस्तुदत्येव तदीयवारिजम् ॥२७

(इति हसन्नेव निष्क्रान्तः)

( ततः प्रविशति द्वाविंशतिवर्षदेशीयः कश्चित् सुकुमारो युवाकविः )

(नेपथ्ये श्रूयते)

१. संस्कृतसाहित्येऽन्योक्तेरुद्भवविकासयोरालोचनात्मकमध्ययनमिति लघुरूपककारस्य (राजेन्द्रमिश्रस्य) डी. फिल् शोधविषयः ।

हृद्यं हारि हरिप्रियं हितकरं हैयङ्गवीनं हृदि
प्रीतं पूततमञ्च गाङ्गसलिलं नेत्रद्वये राजते।
वीणानादझरी यदीयवदने श्रान्तेव विश्राम्यति
सोऽयं वागुपलालितो विजयते राजेन्द्रमिश्रोऽन्तिमः ।।२८

भो भोः सहृदयाः पण्डितराजो जगन्नाथोऽपि यमात्मवंशधरत्वेन सङ्केतितवान् सोऽयमभिराजोपनामा नवयुगीनो युवाकविः राजेन्द्रमिश्रोऽधुनाधिमञ्चं प्रविशति ।

उत्तरप्रदेशस्थजौनपुरमण्डलान्तर्गते स्यन्दिका (सई) पुलिनस्थिते द्रोणीपुराभिधे ग्रामे लब्धजनिरयं कविः साम्प्रतं प्रयागविश्वविद्यालये शोधकार्यं सम्पादयन् भृशं चकास्ति ।

अभिराजः : राजेन्द्रमिश्रोऽहं सर्वान् सादरमभिवादये। सर्वप्रथमं स्वाभिधानरहस्यं प्रस्फुटीकरोमि ।

अभिराजी नाम्नासि जननि ! तस्मादहमप्यभिराजः ।
त्वमसि मदर्थं यमुना गङ्गा भरतधराऽचलराजः ।।२९

यत्किञ्चिदपि कुतोऽपि कदापि क्वचिदपि ममानुकूलम् ।
भूतभाविभवतां ननु तेषां त्वमसि जननि ! शुभमूलम् ।।३०
(नेपथ्ये साधुवादाः श्रूयन्ते)

साम्प्रतमहम् एकां नवनिर्मितां वाणीविषयिणीं मुक्तगीतिकां श्रावयामि। यदि काऽपि त्रुटिः स्यात् तर्हि क्षन्तव्योऽस्मि । शृण्वन्तु भवन्तः !

जयतु जननि ! जनमङ्गलकारिणि !!
करकमले तव विलसति वीणा बुधजनमानसविपिनविहारिणि !!
इन्दुकुन्दसमधवलशरीरे, विमलदुकूलविभूषितकाये
शम्भ्वजविष्णुपवनवैश्वानरदेवेन्द्रादिसमर्चितमाये !!
सम्प्रति सम्पादय दयमाना मातः सुरभारति ! निजममताम्
ज्ञानं देहि देवि ! करुणामयि ! विस्तारय सर्वं प्रति समताम् !!३१!!

(जवनिकापातः)

# रा धा मा ध वी य म्

## पात्रपरिचयः



सूत्रधारः (उद्घोषकः)

माधवः (कथानायकः)

बलभद्रः (माधवाग्रजः)

नन्ददेवः (माधवपिता)

अक्रूरः (सारथिः)

राधिका (माधवप्रणयिनी)

चन्द्रकला (राधासहचरी)

ललिता (राधासहचरी)

यशोदा (माधवजननी)

[रचनाकालः १९६६ ई०]

मथुरानरेश कंस के आमन्त्रण पर उसका यागसमारोह देखने के लिए यशोदानन्दन कृष्ण व्रजग्राम छोड़कर मधुपुरी प्रस्थान करते हैं। इस आकस्मिक विछोह के कारण नन्दग्राम का समस्त वातावरण संतप्त हो उठता है। कृष्ण के पितृचरण नन्द, माँ यशोदा तथा अन्यान्य सुपरिचित अनन्यप्रणयी गोपजन अत्यन्त व्यथित हो उठते हैं।

परन्तु माधव के वियोग का सर्वाधिक प्रभाव वृषभानुतनया राधिका पर है जो कभी उनकी शैशवसहचरी थी परन्तु अब पौगण्डप्रेयसी हो गई है। चन्द्रकला ललिता (सखियों) द्वारा अनेक प्रकार से सन्तोष दिये जाने पर भी राधा का सन्ताप कम नहीं होता। माधव के मधुर सहवास की मादक स्मृतियाँ उसे विक्षिप्त बना देती हैं। आत्मभर्त्सना एवं भावी वियोग की दाहक अनुभूतियाँ उसे अचेत बना देती हैं।

माधव के सुखद-स्पर्श से वह प्रत्यागतचेतना होती है। अत्यन्त विश्वस्त एवं मधुरवचनों से समस्त पुरवासियों को धीरज बँधा कर कृष्ण एवं बलराम मथुरा को प्रस्थान करते हैं। प्रस्तुत रूपक में अनेक अन्यापदेशपरक पद्य तथा संवाद इसी दृष्टि से विन्यस्त किये गए हैं ताकि पुराणसम्मत वह करुण-प्रसङ्ग यथासम्भव आस्वाद्य बने।

# राधामाधवीयम्

घृष्टा येनासुरेन्द्रा बहलबलयुताः कालियाहिश्च बद्धः
आसप्ताहं धृतोऽभूदविरतमचलो येन गोवर्धनाख्यः।
नीवीग्रन्थिर्न मुक्ता तदपि मधुवने येन राधाप्रियायाः
अव्यात् सोऽस्मान्मुकुन्दः प्रणयरसभराक्रान्तकायश्चिराय ॥१

अपिच,

धृत्वा शीर्षेऽम्बुकुम्भं विगलितवसना सत्वरं सद्म यान्ती
मार्गे प्रोक्ता सहेलं मधुमयहरिणा शोभनेऽहं पिपासुः।
इत्याकर्ण्य भ्रमोक्ति[1] शिथिलितगमना स्मेरलज्जाश्रु-
सन्धिर्माङ्गल्यं क्षेममूलं प्रमुदितवदना राधिका नो ददातु ॥२

सूत्रधारः : (पुष्पाञ्जलिं विकीर्य)

भो भोः सहृदयाः ! प्रयागविश्वविद्यालयीयसंस्कृतविभागाध्यक्ष-पदमलङ्कुर्वतां वेदविद्यापारङ्गतानां चतुर्वेद्युपाह्वानां श्रीमतामत्र-भवतां सरस्वतीप्रसादमहोदयानां सेवानिवृत्तिमहोत्सवे समागतवन्तो भवन्तो विदाङ्कुर्वन्तु यदस्मिन् भाद्रपदमासे आनन्दकन्दस्य प्रभोर्मुकुन्दस्यैव[2] गीतिः प्रतिगृहं गीयते। तस्माद्भवताम्मनोविनोदाय अहमपि तावत् तद्गुणनिकरकरम्बितं किञ्चित्सङ्गीतकमुपस्थापयामि।

(श्रुतिमभिनीय)

किमुक्तम् ? भोःसूत्रधार ! किमनेन स्वल्पजनानन्ददेन संगीतकेन ? रूपकं किमपि सकलजनमनोहारिणावागुरिकमुपनयतु भवानिति।

---

१. पिपासा जलाय रतिव्यापाराय वेति भ्रमः।
२. लघुरूपकमिदं प्रयागविश्वविद्यालयीयसंस्कृतविभागस्य पूर्वाध्यक्षभूतस्य पण्डित-सरस्वतीप्रसादचतुर्वेदिमहाभागस्य सेवानिवृत्तिमहोत्सवमधिकृत्य (१९ सितम्बर सन् ६६ ई०) विरचितं प्रकाशितञ्च विभागीयपत्रिकायाः सुरभारत्याख्यसार-स्वताङ्के।

साधु रसिक ! साधु । मयापि पूर्वमिदमेव चेतसि निश्चितम् । किन्तु समयाभावं निरूप्यैव प्रियतमया तस्मान्निवारितः । भवतु एवमेव तावदनुतिष्ठामि ।

( किञ्चित्पदं गत्वा विचिन्त्य च )

भो बन्धवः ! प्रत्नकवीनां कामपि रूपककृतिं सुखेन अनभिनेयां दृष्ट्वा प्रस्तौमि तावद्धोरामात्राभिनेयं दृश्यद्वयात्मकं नवनवम् एकाङ्किरूपकं राधामाधवीयं नाम । कर्ता त्वस्य महाकविचरणरेणुकरिपोतकमात्मानं मन्यमानः वाणीवीणानिक्वाणक्वणितवैखरीकः एम० ए० परीक्षोत्तीर्णः लब्धबहुस्वर्णपदकः सद्यः समाप्तशोधकार्यः अस्यैव प्रयाग-विश्वविद्यालयीयसंस्कृतविभागस्य प्रसूतिः बालकविः मिश्रोपाह्वः राजेन्द्राभिधः । तद्यथा—

श्रीमद्भागवताङ्गरागकलितोऽभूद्यस्य विद्याग्रणी<br>
रामानन्दपितामहश्च जनको दुर्गाप्रसादाभिधः ।<br>
पाण्डित्यप्रभुतावतां मतिमतां शिक्षावतां श्रीमतां<br>
धौरेयो जनकानुजस्सुकृतिनामाद्याप्रसादाभिधः ॥३<br>
भ्रात्रीयस्तस्य शिष्यश्च पादपद्ममधुव्रतः ।<br>
सोऽयं राजेन्द्रमिश्राख्यः कविर्विजयतेतराम् ॥४

तदधुना प्रियतमां कौमुदीमात्मानञ्च राधामाधवीकृत्य आगच्छामि । भवन्तोऽपि श्रीमन्तस्तावत् क्षणमात्रं मौनमवलम्ब्य तिष्ठन्तु ।

( इति निष्क्रान्तः । इति प्रस्तावना )

[ यमुनातीरे प्रथमं दृश्यम् ]

(ततः प्रविशति मलिनवदना राधिका सख्यश्च )

चन्द्रकला : अयि सखि ! किमनेन वृथाङ्गपरितापेन ? सत्यं ब्रवीमि यदसौ माधवः सर्वथा तादृशो नास्ति यादृक्त्वया परिकल्पितः । को नु खलु स्वहस्तसंवर्धितं प्रणयद्रुमं स्वयमेव कृन्तति ?

राधिका : चन्द्रकले ! सुष्ठु भणितं त्वया। किन्तु स्नेहपारवश्यान्न शक्नोम्यात्मानं नियन्तुम्। यदवधि मया प्रियतमस्य मधुपुरगमन-वृत्तान्तः श्रुतः तस्मादेव क्षणात् किञ्चिदप्रियम्भावि स्मारं स्मारं चेतो मे दह्यते ! यतो हि,

धैर्यं तोषकरं विहाय हृदयं हैयङ्गवीनाञ्चितं
जाने कुत्र गतं शरीरहरिणं त्यक्त्वा मनीषामृगी।
प्रत्यङ्गं परितापयन्प्रतिपलं राराज्यते दर्पकः
सत्यं हीनसहायकं जनमहो लोकस्तृणं मन्यते ॥५

ललिता : सखि राधिके ! स्नेहानुरूपिणी एव तवेयं दशा। किन्तु लवलीलता-वलयमसृणे प्रणयाङ्कुरे भग्नप्राये सति धैर्यमेव तावत्प्राणपाथेय-मित्याहुर्मनीषिणः। पश्य

कालिन्दीपुलिने कदम्बविपिने नृत्यन्मयूरावली
कूजत्कोकिलमञ्जुले मधुवने गुञ्जद्द्विरेफाकरे।
यद्वीतं निभृतं कृतञ्च हरिणा साधं यदाकल्पितं
शल्यीभूय तदेव साम्प्रतमहो किञ्चित्करोत्यन्यथा ॥६

राधिका : ललिते ! अवितथं भणसि। यमुनापरिसरे विद्यमाना इमे पीलुवञ्जुल-निकुञ्जाः इमाश्च विविधव्रततिवलयावलयः सर्वथा मे सखीभूताः। अत्रस्थेषु धूलिकणेष्वपि मया सर्वदैव प्राणाधिकस्य घनश्यामस्य प्रतिबिम्बो लक्षितः। स एव मदङ्गमाकन्दमञ्जरीमधुव्रतो नन्दसूनुः अद्य निष्ठुरीभूय मधुपुरीं गन्तुमुत्सुकः। तत्कथं प्रियविरहिताऽहं यमुनातटोपादानानि पश्यन्त्यपि व्रजप्रदेशेऽस्मिन् निवत्स्यामि !

निबद्धं यं दृष्ट्वा कमलकलिकायां मधुकरी
निशि भ्रान्ता नान्तं विरहविपदो हा गतवती।
प्रभाते मुक्तोऽसौ यदि मधुकरोऽन्यत्र गमनं
समाकाङ्क्षत्यालि ! प्रणयविधुरा सा चरतुकिम् ??७

हा दैव ! कथं त्वया कल्पितः स्त्रीजनो नाम !

हृदयन्तु कृतं घृतोपमं प्रमदानामभिराममन्दिरम् ।
कृतवानसि निष्ठुरं कथं पुरुषं तत्र सुरोपमं स्थितम् ॥८

(इति मूर्च्छति)

ललिता : सखि चन्द्रकले ! प्रहिणु तावन्नयनम् । सोपरागा कौमुदीव विव वदना राधिका प्रालेयसीकरासारनिहता मुग्धशेफालिकेव हतचेत परिलक्ष्यते । तर्हि शीघ्रमेव इमां तरुवीथीमतिक्रम्य निभृतनि गच्छ । लवङ्गलताकुञ्जस्य किञ्चिदीशानभागे कृतककन्दर्पम शयानस्तिष्ठति नन्दसूनुर्भगवान्मुकुन्दः । तमन्तरेण नास्ति मे सख सन्तापापनीदनम् !

(अपटीक्षेपेण प्रविश्य)

माधवः : अलमलमतित्वरया । सखि ललिते ! अयमहं स्वयमेवागतो

(इति राधिकासमीपमुपसर्पति) ।

प्रिये राधिके ! किमेवमात्मानं पीडयसि ? मधुपुरस्थितोऽपि कि जनस्त्वां विस्मर्तुमीशते ? पश्य—

ईष्टे इति- साधु-

आकाशस्थोऽपि चन्द्रो मृदुलकुमुदिनीं नन्दयत्येव नित्यम् ।
अस्तं यातोऽपि भानुर्मुदयति नलिनीं सानुरागोऽनुरक्ताम् !
सायुज्यं प्रेममूलं प्रभवति न मनाग्बाधितुं विप्रवासः
एवम्भूतेऽपि कोऽयं सुतनु ! ममकृते प्राकृतस्ते प्रमोहः ॥९

(इति सपुलकं राधिकायाः केशकुन्तलं गण्डस्थलादपसारयति)
(जवनिकापातः)

[व्रजग्रामे द्वितीयं दृश्यम् ]

(नेपथ्ये गीयते)

त्यज चातक ! नववारिधराशाम् !
स्वजनजनितमिह सुखमतिकठिनं मा कुरु मनसि विभाषाम् !!
कुवलयलयये मधुकरगीतिः परभृतशिशुके वायसरीतिः.
उभयदशायां भवति विदारणमहह कलय परिभाषाम् ॥१०

(ततः प्रविशति स्वर्णमयरथारूढो माधवः बलभद्रसहितः)

माधवः : आर्य हलिन् ! दैत्याधिराजस्य कंसस्य निमंत्रणं सम्प्राप्यापि प्राणवद्-गोकुलं परित्यजतो मम हृदयं कुण्ठितमिव प्रतिभाति । यतः—

तरलगरलैर्मन्दं मन्दं तनुः प्रविशीर्यते
विरलजलदैर्दृत्तारापथश्च विलीयते ।
हृदयपदवी स्निग्धा सेयं प्रसह्य विभाविता
व्रजधरणिजैर्भावैश्चेतो दुनोति तथैव मे ॥११

बलभद्रः : माधव ! जानामि तेऽनुरागं जन्मभूमिं प्रति । किन्तु कियत्कालं सयौवनः स्थास्यसि ? यद्यपि प्रसूतिमन्तरेण सर्वेणापि बालोचित-वात्सल्यसौख्यदानेन समुपचितत्वात् जननीं यशोदां प्रति विद्यते तव महत्कर्तव्यम् । एता व्रजयुवतयोऽपि स्वकुटुम्बरीतिं विस्मृत्य कान्त-भावेनैव त्वां स्वीकुर्वाणाः सर्वथा त्वयानुग्राह्याः । तथापि समागतोऽ-यमवसरः कर्मक्षेत्रेऽवतरणस्य । पश्य ! दैत्याधिराजः कंसः मगध-नरेशाज्जरासन्धात् जामातृपदमवाप्य द्विगुणितबलोऽधुना प्रजां भृशं पीडयति । जन्मदात्री ते भगवती देवकी जनको वसुदेवश्च अद्यापि विकटलौहनिगडशृङ्खलितौ मधुपुरीकारागारे दुरन्तकायिकदुः-खमनुभवतः । तत्कथमीदृशी तेऽनुरक्तिः प्रणयव्यवहारेषु !

माधवः : आर्य ! मधुपुरीवृत्तान्तमहं नैव न जानामि । न च पुनर्मे आसक्तिः प्रणयव्यवहारेषु । किन्तु इदमेव संस्मृत्य विकलीभवन्ति मे इन्द्रियाणि यन्मद्विरहितं वृन्दारण्यं कीदृशं भविष्यति ? सर्वेऽपि व्रजवासिनः सर्वाश्च गोपाङ्गनाः मत्स्वरूपं सुष्ठु विज्ञाय स्वचित्तज्वालां शमयितुं शक्ष्यन्त्येव । किन्तु वराकी वृषभानुजा सा मदेकशरणा मदर्थपरित्य-क्तसर्वस्वा कीदृशी भविष्यति ? अथवा मदान्धमधुकराणामेव इयं वृत्तिः कथ्यते ।

सम्भूतोपवने प्रियङ्गुलतिका माकन्दमौलिं श्रिता
इयमं स्वार्थवशात्त्वया प्रतिपलं सङ्गम्य संभाविता ।

 

भ्रातर्भृङ्ग ! मनागपि स्मृतिपथं भुक्तोज्झिता सा कथं
शेफाली न समागता प्रणयिनी ग्राम्या त्वदीक्षारता ॥१२

बलभद्रः : वत्स ! अनेन ते प्रणयानुरोधेन क्षणमात्रेणैव सांसारिकोऽस्मि संवृत्तः। अग्रजत्वेन यद्यपि अस्मिन् विषये किञ्चिदपि मंत्रयितुं नाहं समर्थः किन्तु मृणालमसृणा सा राधिका अवश्यमेव सविशेषं त्वया प्रबोध्या। पश्य तावत् ! एते खलु निखिलपौरजनाः त्वद्विरहविधुराः सोरस्ताडं विलपन्तः इत एव प्रसरन्ति । तद्गच्छ, शीघ्रमेव तान् प्रबोधय।

(सारथिं प्रति)

पितृव्य अक्रूर ! भवानपि तावद्रथं नियमयतु ।

(माधवोऽवतरणं नाटयति)

(ततः प्रविशन्ति विलपन्तो व्रजवासिनः यशोदानन्दौ सखीसहिता राधिका च)

यशोदा : हा वत्स नवनीतप्रिय ! हा मुकुन्द ! हृदयमधुपारविन्द ! कथं खलु त्वया विना व्रजप्रदेशेऽस्मिन् स्थास्यामि ? भगवन् अक्रूर ! कथं खलु भवान् मादृशीं वृद्धजननीं प्रतार्य मत्सर्वस्वं कंससमीपमुपनयति ? कथं न विचार्यतेऽत्रभवता ।

सद्योजातं कुलाये परभृतशिशुकं वायसी साभिलाषं
क्रोडीकृत्यापि भेदे त्रिभुवनविदिते सावहेलं जहाति ।
धात्रीम्मन्या परन्तु त्वयि निहितबला हा ! बलाकेव दीना
साहं सर्वस्वहीना हृतनिखिलधना त्वां तथैव प्रतीक्षे ॥१३

(इति मूर्च्छति)

 

नन्ददेवः : अयि अक्रूर !

कंसोऽसौ यदि याचतेऽथ तुरगं गावं गजं वा धनं
तेषां कोटिमपि प्रदातुमधुना सोऽहं भवाम्युत्सुकः ।
कारागारनिषेवणं विदलनं सर्वं सहे किन्तु भोः
मन्नेत्राञ्चलचञ्चचारुचरितं चन्द्रं न दूरीकुरु ॥१४

हा वत्स शकटबलकेशिप्रभृतिप्रमाथिन् ! हा व्रजैकप्राणाधार !! कोऽधुनाऽऽस्माकीं विपत्तिं छेत्स्यति ? अयि यशोदे ! एहि तावद् वत्सं परिष्वजस्व ।

(इत्युपसर्पति)

(सहसा सम्मर्दे प्रविश्य)

माधवः : तात ! मत्कृते भवता स्वदेहस्येदृशी दुर्दशा नो कार्या । यतोऽधर्मिणस्तस्य कंसस्य यज्ञविधानं निरूप्य पापिनस्तस्य वधं वा विधाय कतिपयैरेव दिवसैः अहमागमिष्यामि । भवताऽपि प्रबोध्या इमे पौरवर्गाः ।

(अभिमुखीभूय)

अयि व्रजवासिनः ! किन्न जानन्ति भवन्तः आत्मानं प्रति मदीयमनुरागम् ? तन्निवर्तन्तां भवन्तः स्वगेहान् । अहमपि शीघ्रमेव मधुपुरीं निरूप्य कुशलिनीं व्रजभूमिं द्रक्ष्यामि ।

(यशोदां प्रति)

ध्यादाय प्रसभं मुखं मम यदा ब्रह्माण्डखण्डं महद्
पश्यन्ती सभयं जडेव रहिताऽऽसीस्त्वं मुदा चेष्टया ।

 

मां संश्लिष्य त्वया तदा यदुदितं मृद्भक्षणे शैशवे
अद्यापि स्मृतिमेति चैष्यति सदा मातश्शपेऽहं त्वया ॥१५

(इति रुदतीं यशोदामङ्के निधाय प्रबोधयति)

अयिमातः किं विस्मृतासि !

यशोदा : वत्स माधव ! पूर्वमेव मया गृहपरिसरे क्रीडन्तीं वृषभानुजामवलोक्य त्वद्विवाहयोग्यां कीर्त्यै तज्जनन्यै एतदर्थं स्वीकृतिर्दत्ता। साप्यधुना संशयितैव लक्ष्यते। किन्तु सा वराकी त्वदनुरागरञ्जिता दूरीभूते त्वयि सलिलविरहिता मुग्धशफरीव सम्प्रति कथं प्राणान् धारयिष्यति ? यतः,

धन्यास्ते ये कनकरशनां कीर्तिदां राजलक्ष्मीं
नानासौख्यप्रचितविभवां रागिणीं सन्त्यजन्ति।
उद्भूतोऽयं मसृणमसृणः कोऽपि प्रेमाङ्कुराख्यः
छिन्नं भिन्नं प्रणयिहृदयं क्षीयमाणः करोति ॥१६

पश्य तावदियम्मे दारिका अविरलाश्रुसम्पातक्लिन्नकञ्चुका प्रियविरहिणी चक्रवाकीव पिशङ्गवर्णा ललिताचन्द्रकलाभ्यां धृता तिष्ठति। तद्गच्छ प्रबोधयैनाम्।

माधवः : (उपसर्प्य)

प्रिये राधिके ! ह्यो मया प्रबोधिताऽपि त्वमीदृशीमवस्थां प्राप्तासि ? त्वयैवाहं मधुपुरगमनाय अभ्यनुज्ञातोऽस्मि। कथं पुनरात्मानं भृशं पीडयसि ?

तवैव बुद्धिर्मम बुद्धिरिन्दुजा स्तुतिस्तवैव प्रिय ! मेऽस्ति वैभवम्।
इतीरयित्वाऽपि कलिन्दजातटे प्रियेऽधुना मोहमुपागता कथम् ॥१७

( इति चिबुकमुन्नमय्य गाढमालिङ्गति )

राधिके ! माधवस्य तु प्राणाधिकासि त्वम् अतस्त्वया मनागपि चिन्ता न कार्या । द्वित्रैरेव अहोभिः यज्ञशालां निरूप्याहं वृन्दारण्यं पुनः द्रक्ष्यामि । तदा त्वया सार्धं पुनरेव कदम्बकुञ्जश्यामले रविजातटे विहरिष्यामि । तद्गच्छ गृहसारिकां शिखिनं सुरभीश्च प्रबोधय । मदभावे त्वमेव जननीजनकयोः कृते कृष्णरूपासि । अतएव आत्मशोकं संयम्य तौ नक्तन्दिवं प्रबोधनीयौ त्वया !

( इति बाष्पगद्गदमाश्लेषं शिथिलयति । सख्यौ प्रति )

सखि ललिते ! चन्द्रकले !!

दर्शं दर्शं यदेन्दुं सजलजलधराच्छन्नतारापथीयं
क्षामक्षामा सखी ते ,विरहमतिघनं मद्गतञ्चाप्यसोढ्वा !
उन्मत्तेव प्रमुग्धा यदि हि जिगमिषेत्तीरमादित्यजायाः
सख्यौ ! सङ्गं विहाय क्वचिदपि गमनं मा भवेत्तद्भवत्योः ॥१८

( इति रथमारुह्य प्रयाति )

चन्द्रकला } ललिता } सखि राधिके ! प्रियतमसन्देशमेव संस्मृत्य स्वशोकवेगं नियमय । आवान्तु सदैव त्वदन्तिक एव भविष्यावः ।

( राधिका अश्रूणि मुञ्चति )

चन्द्रकला : सखि ललिते ! माधवगमनेन सकलोऽपि लोकश्चराचरात्मकस्तद्वियोग-विधुरः परिदृश्यते । पश्य तावत्—

हरिततृणसमूहं भुक्तमर्धं हि धेनुस्त्यजति कवलपुञ्जं चञ्चुसंस्थं मयूरी ।
नवकिसलयमालां रक्तवर्णां निपात्य प्रकटयति कदम्बश्शोकवह्निं स्वकीयम् ॥१९

अयि विधे ! प्रियतममाधवस्य शिवाः पन्थानो भवन्तु !

( इति राधिकां क्रोडीकृत्य निवर्तेते ) ।

( नेपथ्ये भरतवाक्यम् )

आशैलादा च कन्यां श्रितजलसरितश्शैलकान्तारपुञ्जा-
स्तीर्था ये मुक्तिकल्पा अगणितकणिका भारतीयाचलायाः ।
तेषां भूयान्निनादः पटहशतमितोऽयं सदा विश्वव्यापी
देशोऽयं सोऽस्मदीयः सुकृतधनवतां विद्विषाम्मानमर्दी ॥२०

भूपालास्सन्तु ये केऽपि सौराष्ट्रासमधारिणी ।
एकसूत्रा परं भूः स्यादाहिमालयसागरम् ॥२१

( जवनिकापातः )



# फण्टूसचरितभाणः

**पात्रपरिचयः**



सूत्रधारः (उद्घोषकः)

प्रत्यूषः (=फण्टूसः)

[रचनाकालः १९६७ ई०]



फण्टूसचरितभाण ( प्रत्यूषचरित ) आधुनिक फैशनपरस्त उच्छृङ्खल युवा छात्रसमाज पर एक तीखा व्यङ्ग्य है। संस्कृत में भाणकोटिक रूपककृतियों की सर्जना प्रायः वेशवाटों का पर्दाफाँश करने के लिए हुई है। चतुर्भाणी (सम्पादक डा. मोतीचन्द्र तथा डा. वासुदेवशरण अग्रवाल) के अध्ययन से ज्ञात होता है कि गुप्तयुग में बड़े-बड़े उच्चवर्गीय राजपुरुष, कवि, वैयाकरण, गायक-वादक, सेनापति एवं नरेश तक इन्हीं वेशवाटों की धूलि छानते थे। विट प्रायः इन्हीं 'छिपेरुस्तमों' पर फब्तियाँ कसता और उनके 'बहिःकाञ्चनलेपित' व्यक्तित्व का रहस्योद्घाटन करता था।

प्रस्तुत भाणरचना का प्रतिपाद्य उस दृष्टि से थोड़ा पृथक् है। एकनटप्रकृति के कारण यह एकांकी भाणकृति है परन्तु इसका नायक वेशागार का विट नहीं प्रत्युत एक युवा छात्र है जो कि यौवन की देहरी पर पैर रखते ही डगमगा गया है। वह अपनी मातुलपुत्रिका वागुरा का प्रच्छन्नप्रणयी है और उसी से मिलने के लिए इलाहाबाद के मम्फोर्डगञ्ज मुहल्ले से कीडगञ्ज तक की यात्रा करता है। उसकी शिक्षा, उसका मनोविज्ञान और उसके विचार यद्यपि सामान्य युवाछात्रों से नहीं मिलते फिर भी छात्रों के एक परमविशिष्ट समुदाय का प्रतिनिधित्व अवश्य करते हैं।

विभागीय प्राध्यापकों तथा अन्यान्य नामों की नूतन व्युत्पत्तियाँ, अंग्रेजी शब्दों का आंशिक भाषासमक प्रयोग तथा प्राक्तनग्रन्थवचनों की विटोचित व्याख्याएं रूपककार की अपनी उपलब्धियाँ हैं।

# फण्टूसचरितभाणः

(नेपथ्ये नान्दीपाठः)

स जयति पीतदुकूलः प्रथमाचार्यो हि नागरगणानाम् ।
भर्ता व्रजयुवतीनां सत्स्वपि भर्तृषु गृहे तासाम् ॥१

अपि च

मातुश्चित्तं प्रभाते सुललितवपुषा चोरयित्वा यथेष्टम्
ग्रासन्ध्यं चोरयन्त्यः प्रतिगृहमदति क्षीरतक्रादिपेयम् ।
सूर्यास्ते नागरीणां हरति पुनरहो योऽङ्गरागं निकुञ्जे
चौराचार्यो मुरारिः स भवतु भवतां भव्यभावाय नित्यम् ॥२

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

दिष्ट्या सुप्रभातं सुसन्ध्यश्चाद्य दिनम् । अयमहं भोः आर्यमिश्रान् प्रणिपत्य विज्ञापयामि (आकाशे कर्णं दत्वा) अरे रे खण्डितवृत्त ! किमर्थं मां समारब्धव्यापारकं मार्गस्थकाकोदर इव व्याकुलीकरोषि ? (श्रुतिमभिनीय) किं ब्रवीषि ? मातुल ! किंकृतेयं चौराचार्यस्य वन्दना इति । साधु रसिकशिरोमणे साधु ! अस्मिन् खलु महति सहृदयजनसम्मर्दे त्वामेवैकं परमार्थतः काव्यानन्दपरिपूरितचित्तं जानामि । (ईषद् विहस्य) तर्हि खलु छिन्नव्रनग्रन्थिरिव जनः स्वाभिप्रायमेव निवेदये । (किञ्चिदग्रेसरीभूय)

अस्ति खलूत्तरप्रदेशान्तराले हिमवद्विन्ध्यकुण्डलाञ्चिता यामुनगाङ्गसङ्गममयी तीर्थराजाभिधाना प्रयागनगरी । तत्र तु विविधविषयपारङ्गतविद्वत्तल्लजमहीयान् निखिलविश्वविद्यालयालङ्कारभूतो वर्तते कश्चिद् विश्वविद्यालयो यत्र स्थितो देववाण्याः विद्याविभागोऽन्यान् अतिशयानः रुद्राक्षमालीयस्सुमेरुरिव राराज्यते । तद्यथा—

मीमांसामार्गपान्थाः कुलपतितिलकाः प्राच्यपाश्चात्यदक्षाः
गङ्गानाथा बभूवुस्तदनुकृतिरहोऽध्यक्षवर्यः प्रसन्नः ।

बाबूरामोऽभिरामो रघुवरमृदुलो मैथिलश्रीरुमेशः

क्षेत्रेशाद्या यदीया विबुधपुरि यथा षण्मुखः कार्त्तिकेयः[1] ।।३

अपरञ्च

स जयतु विहसितवदनः पूर्वाध्यक्षश्चतुर्वेदाङ्कश्च ।
मान्यवरः किल विदुषां श्रीमत्सरस्वतीप्रसादः ।।४

( प्राञ्जलिस्सन् ) सोऽहमद्य तादृशस्यैव संस्कृतविभागस्य कञ्चिन्महिमानं प्रस्तूय वृत्तान्तञ्चाभिनवं विनिवेद्य गच्छामि ।

अथाध्यक्षपदमुक्तेषु गुरुचरणेषु तत्रभवत्सु श्रीसरस्वतीप्रसादेषु तत्रभवती मथुरानारायणहिर्लेकरेत्यभिधाना ज्येष्ठात्वेनाऽऽसत्रं विभागाध्यक्षपदमलङ्कृतवती ।

तदनु च विद्वद्धौरेयो मिश्रोपाह्वः डाक्टरश्रीमानाद्याप्रसादमहाभागः प्रभातरजनिमनुगतो बालमार्तण्ड इव तदेव पदं शोभनं बिभर्ति । निश्चप्रचमिदं यदेतदीयं सौरमण्डलं स्ववैशिष्ट्येन दिव्यमपि सौरमण्डलमतिशेते । यतस्तस्मिन् मण्डले बहवो ग्रहा विद्यन्तेऽत्र तावन्न कोऽपि ग्रहः ।

सुरलोकमप्यतिक्रामति संस्कृतविभागोऽयम् । तत्रस्थो हि लक्ष्मीकान्तो विष्णुः न सरस्वत्याः वरदपुत्रः न चाध्यापनकार्यदीक्षितः यावदत्रस्था गुरुचरणाः[2] सर्वथा तादृशा एव ।

तत्रस्था हि देवी चण्डिका तत्प्रसादस्तत्प्रसादविभ[3]वश्चेति त्रयोऽपि पार्थक्यं भजन्ते यावदिह गुरुचरणेषु चण्डिकाप्रसादशुक्लेषु[4] त्रयाणामेव तेषामेकवसतिः वर्तते ।

---

१. महामहोपाध्यायः डाक्टरश्रीगङ्गानाथझाः डाक्टरप्रसन्नकुमाराचार्यः डाक्टरश्रीबाबूरामः सक्सेना, पण्डितरघुवरमिट्ठूलालशास्त्री, महामहोपाध्यायः डाक्टरश्रीउमेशमिश्रः, पण्डितवर्य्यश्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः, पण्डितसरस्वतीप्रसादचतुर्वेदी इतीमे सर्वे संस्कृतविभागस्य प्राक्तनाचार्याः । २. पण्डितश्रीलक्ष्मीकान्तदीक्षितः (सम्प्रति प्रवाचकपदमलङ्करोति) । ३. प्रसादविभवः शुक्ल इत्यर्थः । ४. अयमपि महाभागस्सम्प्रति प्रवाचकपदमलङ्करोति ।

तत्र तु एक एव सुरेशस्सोऽपि सुराणां देवानां मदिराणां वा ईश:। किन्त्वत्र राराज्यते खलु सुरेशद्वयी[1]। एतदीयौ सुरेशौ तु सुष्ठु राति ददाति विद्याधनं स्नेहञ्च छात्रेभ्य इति सुरो विद्वज्जनस्तेषामीशौ। अपरञ्च किञ्चिद् वैशिष्ट्यम्। तयोरन्यतम: श्रीषु वसतीति श्रीवास्तव्योऽपरश्च पण्डा बुद्धिस्तद्वान् पाण्डेय:।

तत्रस्थो नारायण: श्रीपतिर्यावदत्रस्थोऽपि नारायण: श्रीवास्तव्यत्वेन स एव। किन्त्वसौ तु नराणां समूहो नारस्तेषामयनत्वेन नारायण:। यावदत्रस्थो हि नराणामयं नार: (मानवीयभाव:) सन्तश्चामी नारा भावास्तेषामयनत्वेन लोकभाषायां सन्तनारायण इति प्रख्यात:।

एतदीयो महावीरस्तु 'लक्षसंख्याका इडा: बुद्धयो यस्य स:' लक्षेडा (लखेड़ा) इति प्रख्यात:।

काममर्धनारीश्वरत्वेन स्वर्गलोके गौरीशङ्करयोरेकस्मिन्नेव वपुषि सन्निपात:। कथं वा तत्र सीता (सिया) रामयो: एकायतनवसति:? कुत्र वा ईर्ष्याकषायितचक्षुषां निखिलभूतलजनविद्विषां स्वार्थपरकाणां सुराणां लोके स्वप्रचण्डभुजमण्डलेन रक्षितामरावतीकस्य खट्ट्वाङ्गदशरथादिरूपस्य राजकुमारस्य स्थिति:? किन्त्वस्मिन्नभिनवे देवलोकेऽत्रभवान् रामसियामिश्र इति राजकुमारशुक्लश्चेति सर्वमेव सम्भवति[2]।

(सस्मितम्) तदेतेषामेव गुरुवर्याणां चरणचञ्चरीकायमाणस्सद्य:समवाप्तडाक्टरपदवीको लब्धबहुस्वर्णपदको राधामाधवीयकविसंगमार्यान्योक्तिशतकादिसंस्कृतदृश्यश्रव्यकाव्यप्रणेता बालभाषाकविश्चतुर्विंशतिवर्षदेशीयो मिश्राख्यो राजेन्द्रोऽपि विभागमेतमेव नितरां संसेवते यन्नूतनकृतिरयं भाणोऽद्य फण्डूसचरितं ( प्रत्यूषचरितम् ) नाम भवताम्मनोविनोदाय प्रस्तूयते। तद्यथा—

---

१. डा० सुरेशचन्द्रश्रीवास्तव्य:, डा० सुरेशचन्द्रपाण्डेयश्च सम्प्रति वरिष्ठप्रवक्तृपदभाजौ। २. श्रीसन्तनारायणश्रीवास्तव्य: पण्डितमहावीरप्रसादलखेड़ा, पण्डितरामसियामिश्र:, श्रीराजकुमारशुक्लश्चेति सर्वे विभागीया: प्राध्यापका:।

माता लक्ष्मीर्यत्स्वसा राजलक्ष्मीः रामश्चात्मा बन्धवः पुस्तकानि ।
प्रेमैकं यज्जीवनाधारहेतुः राजेन्द्रोऽयं साहसाङ्कस्स एव ॥५

(श्रुतिमभिनीय)

किं भवानाह ? कथान्तरायः खलु सूत्रधार इति । हन्त भोः सत्यमेव मया विततरूपकभूमिकेन भवतामतिमूल्यः कालो विनाशितस्तदर्हन्ति भवन्तस्सर्वे कृतापराधे मयि स्नेहमाचरितुम् । सोऽयं मत्स्वामिपुत्रः प्रत्यूषनामा (विटः) प्रयागविश्वविद्यालये अधीयानोऽर्थशास्त्रस्य पारञ्जिगमिषुः एम्० ए० प्रथमवर्षीयः इहैवाभिवर्तते । तदहमपि गच्छामि ।

(निष्क्रान्तः । इति प्रस्तावना)

प्रत्यूषः : (ततः प्रविशति म्लेच्छवेषः फटेहालश्च विटो प्रत्यूषो नाम)

हन्त भोः

विटः प्रत्यूष
रतिसाथे

यावत्करोमि पठनेऽभिरुचिं सुतीक्ष्णां धैर्यं निधाय वलयामि च यावदङ्गं ।
वातायनान्तिकपथेन तु तावदेव यान्ती छिनत्ति हृदयं मम कापि बाला ॥६

(नेपथ्ये) भोः फण्टूस ! अद्य प्रभात एव कुत्र संप्रस्थितोऽसि ? किमद्यापि विद्यते क्वचिच्चपेटापातनैस्ते स्वागतायोजनम् ?

(श्रुत्वा स्वगतम्) अये ! कोऽयं मां प्रातरेव दुर्वचनैस्सभाजयति ? (संस्मृत्य सस्मितम्) आं ज्ञातम् । सोऽयं मे सार्वकालिकं कुकार्यमित्रं बन्धूको नाम ( प्रकाशम् ) अरे रे जरच्छवर 'बन्दूक' ! आर्यजनैः सुगृहीतनामधेयं महिलालङ्कारभूतमत्रभवन्तं प्रत्यूषं मां कथं 'फण्टूस' इति कथयसि ? (श्रुतिम् अभिनीय) किं भवानाह स्वरूपलक्षणमिदन्ते इति ( साट्टहासम् ) साधु वयस्य साधु ! कल्पलतेव इयं 'फण्टूसगीरी' किं किं न साधयति ? पश्य—

सम्मर्देषु सभागृहेषु पथिषु प्रायेण मेलासु च
पादत्राणपदास्पदं मृगदृशां कृत्वा यदाद्यक्रमे ।
पश्चात् किन्न ददाति भूरिविभवं सोऽस्यं बलं शोभनं
फाण्टूस्यं तदिदं सखे विजयतां सर्वस्वकं मादृशाम् ॥७

(पुनराकाशे कर्णं दत्वा) किं पृच्छति वयस्यः कुत्र यासीति ? ही ही यदि पृच्छस्येव तर्हि शृणु । अद्य खलु श्रेष्ठिचत्वरस्थिते[1] पैलेसथियेटर-नाम्नि चलचित्रप्रेक्षागृहे माईफेयरलेडीति संज्ञकम् आङ्ग्लचित्रं संद्रष्टुं मद्दत्तवचना मातुलपुत्रिका कुमारी वागुरा मामेव प्रतीक्षमाणा पञ्जरप्रतिरुद्धा शुकीव अमर्षिता किंशुकीभवेत् । तत्तामेव शमयितुं पितृपेटिकामुद्घाट्य दशरूप्यकाणि च मुषित्वा मनःस्फोटगञ्जनतः[2] (मम्फोर्डगंज) प्रचलितोऽस्मि [श्रुत्वा] किमाह ? काऽपेक्षा परेषां कृते धनव्ययस्य ? मातुलपुत्रिकया सार्धं कथं गच्छसीति च । वैधेय ! कोऽयन्ते व्यामोहः ? का वात्र विचिकित्सा ? पश्य,

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥

अपरञ्च, सा मे प्रच्छन्नप्रणयिनी तस्मात् ( इत्यर्धोक्ते, श्रुत्वा ) अये किं ब्रवीषि शान्तं पापमिति ? मूर्ख ! पाटच्चर !! सहस्रसंख्यकान् मूषिकान् भुङ्क्त्वा वृद्धबिडाल इव द्वादशाक्षरमुपदिशसि ? किन्न स्मरसि वर्षान्तिसमारोहरून्ध्यां यदा लघुलोष्टप्रक्षेपणमात्रेणैव केनचित् माडनंगर्लेतिसंज्ञकेन युवतिसमूहेन 'चप्पलै' स्सन्ताडितो मयैव वारितोऽसि ?

(श्रुत्वा) किमाह ? प्रसीद मित्र प्रसीद, परिहासविजल्पितमिदमिति । साधु तर्हि मर्षयामि तेऽपराधम् ।

(नम्रीभूय) पश्य सखे ! जन्मजन्मान्तरपुण्येनैव इदं प्रेम प्राप्यते । यदुक्तं महाकविना भवभूतिना—धन्यं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते इति । भगवता श्रीकृष्णेनापि स्वयमेवोक्तं गीतायाम्— हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् । तस्मादुत्तिष्ठ कौन्तेयेति ।

एतदुक्तं भवत्यत्र—हे पार्थ ! यद्यस्मिन् सङ्गरे निहतस्त्वं तदा स्वर्गं गमिष्यसि । विजयी भवसि चेन्महीतलसुखमवाप्स्यसि । तदस्मिन् पक्षे

---

1. Civil Lines : 2. MamfordGanj इत्याख्यः प्रयागनगरस्य औदीच्यभागविशेषः ।

प्रस्तुतवृत्तेन अप्रस्तुतस्यापि कस्यचिद्वृत्तस्य व्यञ्जना भवति यथा खलु प्रणयवृत्तान्तो ध्वन्यते। अस्मादेवात्र समासोक्तिरलङ्कारः। तद्धि ईदृङ्महीयः प्रेम वयस्य ! का वार्त्ता तत्र कुपात्रसुपात्रयोः औचित्या-नौचित्ययोश्च ? विचार्यतां तावत् किं व्यर्थमेवोदितं पारस्करगृह्य-सूत्रवचनम्—शूद्रामप्येके इति ? तत्प्रणयप्रसङ्गेषु तु प्रत्यूषः साक्षात् गोविन्दानुचर एव ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् इति मन्यमानः !

पुनश्च, जगत्यस्मिन् वस्तुद्वयमनिर्वाच्यम् ! प्रथमं तावन्माया द्वितीयन्तु प्रेम। किन्तु यदि प्रेम नायक इव माया नायिकेव तयोस्सङ्गमश्च परिणय इव स्वीक्रियेत चेत्तदा सर्वमेव सुवाच्यं भवति। ब्रू ह्यधुना द्विमुख बन्धूक ! किम्मयानार्यमाचरितम् ?

(श्रुत्वा परितुष्य च) अये ! धन्यो धन्य इति ब्रवीति (प्रकाशम्) तर्हि सखे यास्याम्यधुना पुनर्दर्शनाय। (इति गायन् प्रचलितः)

बाला बलाकरुचिबालमृणालहस्ता चन्द्रानना कलितदीपशिखेव दीप्ता।
काकोदराभचिकुरा मृगशावकाक्षी लक्ष्यीकरोति हृदयं मम नेत्रबाणैः ॥८

(पुनरुच्चैर्गायति)

पृच्छामि पाठ्यविषयां विपदं सखायं नूनं हि तां झटिति तेऽपि विदारयन्ति।
कन्दर्पजं तदपि सम्प्रति हन्त कस्मै व्याधिं निरौषधमिमं विनिवेदयामि।
माकन्दमञ्जुमकरन्दमहो जिघृक्षुर्यावद्वसन्तपवनं नु सभाजयामि।
घ्राणं तदा द्विगुणगन्धभरोपचारैश्चारीकरोति खलु कापि वसन्तसेना ॥९

(घटिकायन्त्रमवलोक्य) हन्तः भोः स्वल्पयैव वार्तयाऽनल्पो मे कालो विनाशितो दुष्टबन्धूकेन ! द्वादशवादनवेलेयं घटिकया। तन्मुहूर्तमस्मिन् 'कम्पनीगार्डेन' इत्याख्ये मिथुनोद्याने उपविश्य स्वपरिश्रममतिवाहयामि। तदिदं बकुलालवालं यदधस्तले आषाढस्य प्रथमदिवसे प्रथमसन्ध्याकाले च प्रथममेव तावद् वागुरा मे चञ्चलयौवनकुरङ्गस्य वागुरीभूता। अथोद्यानपालकमुखं मुद्रादानेन सम्मुद्र्य सा यथेच्छमालिङ्गिता। अये किन्तु खलु चिन्तयत्येव मयि प्रतिभाति मे यथा,

सैव स्फुरत्तडिदिवैति दुकूलवस्त्रा दृष्टद्वयुरोजदृढकञ्चुलिकां दधाना।
पारम्परीणमृदुतां हृदि धारयन्ती चञ्चत्तरीव भुवि चङ्क्रमणं करोति ॥१०

(किञ्चित् संस्मृत्य) किं करोमि मातः ! पञ्चविंशतिवर्षदेशीयोऽस्मि साम्प्रतम्। निरन्तरमेव वर्षत्रयं फेल [ Fail ] नामातिदुर्दान्तेन

शत्रुणा पराभूतस्सन् यथाकथञ्चित् बी० ए० परीक्षां पारितवानस्मि ।  तदपि मे सौभाग्यमेवेति मन्ये । अन्यथा श्रूयते यन्महाबलशालिना फेलाख्येन दानवेन य एव जनोऽनारतं प्रसह्य निर्वलीक्रियते तमेवान्ते तज्जनको हार्टफेल [Heart Fail] इत्याख्यो निश्चप्रचं यमसदनं नयति । तद्भगवत्कृपया वारितोऽस्मि अद्यावधि । भविष्यं तु न जाने ! अपरञ्चापि कष्टं यन्ममावासस्थानं परितः शिखरिदशनाः श्यामा विराजन्ते । क्षते पतितं क्षारमिवेदमपि मां भृशं पीडयति । कथयन्ति गुरवः चरन् वै मधु विन्देत । सत्यम्, किन्तु कुत्र चरामि कीदृशं वा मधु प्राप्तुं प्रयते ? हन्त भोः,

प्राप्स्यामि शान्तिमधुना किल विश्वविद्यास्थानेऽपहाय ललनाजनसम्प्रदायम्।
इत्थं विचार्य हृदि येन धृतं पदं हा सोऽयं मनोमधुकरो जडतामुपैति ॥१२

चिन्तयामि कीदृशास्ते विद्यार्थिनः ये खल्वाजीवनं प्रथमां श्रेणीं लभन्ते दापन्ते च । प्रतीयते यत्तेषां हृदि नूनं कामदुर्भिक्ष एव ( सरोषम् ) किन्तु दास्याः पुत्र्यः एता अपि किञ्जल्काकृष्टा मधुकर्य इव ताने-वानुवर्त्तन्ते ! अपरतश्च मादृशां 'बीनफण्टूसानां' सम्प्रदायो वराकाः खलु ये आदिवसं लानाल्लानं गैलरीतः गैलरीं[1] पर्यटन्ति । 'रेस्त्रां-कैफ्टेरियादिकानां' तु का कथा ! हन्त तथापि गालीम् अपशब्दं चपेटकं 'पुलिसहथकड़ीं'[2] वा विहाय न किमपि पारितोषिकं भवति तेषाम् । तदधुनाऽऽखिलभारतीयफण्टूससंघनिर्माणमन्तरेण[3] न कापि सिद्धिः ।

(सविमर्शम्) एते खलु सुन्दरम्मन्याः लुञ्चितश्मश्रुकाः[4] कर्जनानुवर्तिनो वा दुष्टबटुकाः सर्वेष्वेव क्षेत्रेषु मृदुचेतसां 'फण्टूसानां' विरोधिनः । विद्याऽपि तेषां समारोहोऽपि तेषां शिक्षकसमुदायोऽपि तेषां पदकसम-वायोऽपि तेषाम् । हन्तभोः षोडशीनिकायोऽपि तेषामेव । किं तर्हि वयं निरर्थका एव सञ्जाताः ? किमस्मत्कृते नास्तिकिञ्चित् ? (दीर्घं-निःश्वस्य आकाशे मुष्टिमुद्यम्य) तदहमपि वागुरावानस्मि ! पश्यामि लुण्ठाकाः पश्यामि । हुँः तस्मादेवोक्तं शठे शाठ्यं समाचरेदिति । (पुनर्घटिकायन्त्रं दृष्ट्वा) अये त्रिवादनवेला ? सम्प्रति गन्तव्यम्मया (उत्थाय) किन्तु मार्गद्वयमुखमिदं स्थानम् । भवतु प्रियतमावसतिस्था-

1. From lawn to lawn and from gallory to gallory. 2. Police arrest. 3. All India Federation of vagabonds. 4. Clean-shaved with Curzon cut.

मत्वेन कीटगञ्जनाभिमुखीभूयैव[1] गच्छामि ।
(वामाङ्गस्फुरणमनुभूय) हा धिक्, नामोच्चारणमेव तावदनिष्टं सूचयति ? किमनेन, दत्तोलूखलशिरसां महापुरुषाणां नास्ति भयं मुसलेभ्यः । 'नो पेन्स नो गेन्स' (No pains no gains) इति प्रतिपादयद्भिराङ्गलमनीषिभिरपि इदमेव समर्थितम् ।

[आकाशे] अयि वागुरे ! पश्य त्वदर्थमेव फण्टूसीभूतं प्रत्यूषम् ! अथवा कीटगंजनमेव न कथमुपालभे ?
भ्रातः कीटगञ्जन ! ( कीटगंज ) किन्तव मयाऽऽत्याहितम् ! पश्य ! एक एव प्रयागस्तीर्थराजस्तव मनःस्फोटगंजनस्य च जन्मदाता। 'सिटीत्युपनामा' नगरी एवैका युवयोर्जन्मदात्री ! द्वयोर्जातिरप्येका महेला ( मोहल्ला ) इति । किन्तु बन्धुद्वये कथमजनि स्वभाववैपरीत्यम् ?
पश्य स्वभ्रातरमेव ! कुसुमशरविद्धानां कामिजनानां मनसां स्फोटान् गञ्जयति प्रणयियुगलं संघटयतीत्येतादृशा महिम्ना यो मनःस्फोटगञ्ज ( ना ) ख्यः ।
किन्तु तस्यैवानुजस्सहोदरश्च त्वं कीटान् कुसुमशरविद्धान् तानेव कामकीटान् गञ्जयति विनाशयति इति कर्मणा कीटगञ्ज (ना) ख्यः । यथार्थनामासि बन्धो ! कथमिदमिति चेत्तवाशङ्का तदहमेवास्मयत्र प्रमाणं यः खलु जर्जरीभूतोऽप्रकृतप्रहारैस्त्वदुत्सङ्ग एव ।
तद्भ्रातः मद्वचनैः आत्मनश्चोपकर्तुं विजहि बन्धुविरोधम् ! स्मरतु भवान् किमुक्तं तुलसीदासेन—मिलहिं न कबहुँ सहोदरभ्राता इति। स्वाग्रजपरिपाटीमेव नितरां सेवस्व कल्याणञ्चास्माकं विधेहि। उपयमुनत्वेनापि स्वयोगगङ्गस्य स्वाग्रजस्य समादरः कार्यः [इति प्रचलति]

( भरतवाक्यम् )

भारतभूमिरार्यजनसंवसतिरियमहो
यामुनागाङ्गनीरधवला हिमगिरिशिखरा ।
ज्ञानविवेकयागयमिता बहुगुणसहिता
जीवतु सा चिरं विभवदा कलिमलरहिता ॥ १३

( जवनिकापातः )

1. Kydganj. इत्याख्यः प्रयागनगरस्योपयमुनं दक्षिणभागविशेषः ।

# न व र स प्र ह स न म्

## पात्रपरिचयः



सूत्रधारः (उद्घोषकः)
डिण्डीरकः (मारिषः)
वीरभद्रः (नायकः)
हास्यमुखः (विदूषकः)
करुणालयः (सेनापतिः)
बीभत्सकः (सन्देशहरः)
रौद्रपाणिः (खलनायकः)
शान्तदर्शनः (उभयकुलगुरुः)
शृङ्गारवल्ली (नायिका)
अद्भुतिका (नायिकासखी)
भयानकी (रौद्रपाणिपत्नी)

[रचनाकालः १९६८ ई०]

प्रस्तुत प्रहसन को भावपरक एकाङ्की की संज्ञा दी जानी चाहिए क्योंकि इसके मानवीकृत पात्र रसाधारभूत भावमात्र हैं। संस्कृत काव्यशास्त्र में त्येक रस का स्वरूप सुनिश्चित कर दिया गया है। प्रत्येक रस की परिपाक-प्रक्रिया में तदनुकूल ही विभाव-अनुभाव-सञ्चारी एवं सात्त्विक भाव आते हैं और यही ऐकान्तिक नियमितता प्रस्तुत एकाङ्की को प्रहसन बना देने के लिए उत्तरदायी है क्योंकि इस रूपक के प्रत्येक पात्र अपने स्वरूप को छोड़कर पूर्णतः आत्मप्रतिकूल आचरण करते हैं।

वैसे, एक लघुकथा की कल्पना भी कर ली गई है परन्तु उसे एक गौणतथ्य ही समझना चाहिए। अपने शत्रु रौद्रपाणि की कन्या (जो कि प्रणयिनी भी है) शृङ्गारवल्ली को बलपूर्वक ग्रहण करने के लिए उद्यत राजा वीरभद्र, सेनापति करुणालय के साथ श्वसुरगृह पहुँचता है। कथानक प्रहसनोचित अनेक मोड़ लेता है। अन्त में उभयकुलगुरु शान्तदर्शन के प्रयास से दोनों कुलों में शान्तिस्थापना हो जाती है। रौद्रपाणि अपनी कन्या का परिणय वीरभद्र के साथ कर देता है।

# नवरसप्रहसनम्

(नेपथ्येऽनुश्रूयते)

क्वासौ क्रोडत्कपाली स्वपचगणमणिर्दर्पकारिर्महेशो
बाले क्वेयं त्वदीया ललिततनुलता नव्यनव्यातिभव्या ?
इत्यर्धोक्ते पुरारौ निलयलयवती याऽवतीर्णा सहेलं
सा पार्वत्या दृगाभा भवतु सुखमयी वोऽद्य हैयङ्गवीना ॥१

अपि च

द्वावाद्यस्थौ[1] विहाय प्रथितजनमनोरञ्जनो यो रसोऽभूत्
अन्तस्थौ द्वौ च हित्वा भवति नवनवं यश्च मूलं प्रभायाः ।
मध्यस्थाभ्यां विहीनो विगलितनिजतश्चेन्न सः श्रूयमाण-
स्त्यक्ताद्यन्तो वरोऽसौ नवरसरुचिरः पातु वः काव्यलक्ष्म्याः ॥२

(नान्द्यन्ते सविलासं प्रविश्य)

सूत्रधारः : भो भो रमणीरमणीयचरणताडनतडिद्वलाहकाः अनिहतकलङ्ककल्मषाः परदारदर्शनपरायणाः भुजंङ्गपुरनिवासिनो मच्छ्यालकतल्लजाः (इत्यर्धोक्त एव शीर्षोपरि लोष्टकाघातं नाटयन्) अरे रे रे रे रे रे रे... श्यालशब्दोच्चारणमात्रेणैव कथं मां कदर्थयन्ति भवन्तः ? पश्यन्तु तावत् !

---

१. आद्यस्थौ द्वौ अर्थात् नवरस इत्यस्मिन् पदे नकारवकारौ विहाय यः रसो भवति । अन्तस्थौ द्वौ रकारसकारौ विहाय प्रभामूलं नवं भवति । प्रभा रमणीयतेत्यर्थः । तद्यथा माघेनोक्तम्-क्षणेक्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः । मध्यस्थाभ्यां वकाररकाराभ्यां विहीनश्चेत् नसः इति श्रूयमाणो भवति । सः कोऽपि पुरुषविशेषः इत्यर्थः । न सः इति नसः (सुप्सुपासमासः) अतएव विगलिता निजता पुरुषविशेषत्वं यस्य सः विरहितनिजतस्तादृग्गुणविशिष्टः । पुनश्च, त्यक्तम् आद्यक्षरं नकारं अन्ताक्षरं सकारञ्च येन सः त्यक्ताद्यन्तः काव्यलक्ष्म्याः वधूरूपिण्या नवरसरुचिरो वरः काव्यपुरुषो वो युष्मान् पातु रक्षतु ।

वामा चर्चरिका रम्या रामा मे सुखदायिनी ।
तद्भ्रातृत्वसमाकृष्टाः श्यालास्सन्ति समागताः ॥३

तदहं भवतां समेषां सच्चरणचारणखरखुरेषु प्रणामाञ्जलिं विधाय विज्ञापयामि यद्भवतां मनोरञ्जनाय काचिन्नूतना नाट्यकृतिरस्माभिरभिनेया वर्ततेऽद्य नवरसप्रहसननाम्नी ! कर्ता चास्याः गौतमगोत्रोत्पन्नः अचिरादेवोररीकृतपरमानन्तपदो (Permanent Post) विगलितमदः कृतविद्योऽप्यनविद्यः श्रितदेवोऽप्यदेवः मतमायोऽप्यमायः गुरुकृपापङ्कपल्वलसैरिभः बालपन्नगनिभः राजेन्द्रमिश्रनामाऽभिनवकविः यमधिकृत्येदमनुश्रूयते—

हल्लीसान्ते निपीता यदधरमदिरा माधवेन प्रियायाः
उच्छिष्टायाश्च तस्या दिशिदिशि गलिता याऽनघा कोटिधारा ।
तन्त्रीनादं विपञ्ची सरसविलसितं कोकिलोऽलिः प्रगीतं
राजेन्द्रश्चापि काव्यं रसरसनपटु प्राप किञ्चित्तयैव ॥४

(नेपथ्यगृहाभिमुखमवलोक्य)

अये त्वराकरणाय प्रदत्तशिक्षोऽप्यशिक्षः किन्नु खलु चिरयति डिण्डीरकः ?

(प्रविश्य अपटीक्षेपेण)

डिण्डीरकः : भाव ! शीघ्रमुद्घोष्यतां नाट्यप्रयोगः । एष खलु महाराजो वीरभद्रः स्वप्रणयिनीं रौद्रपाणितनयां शृंगारवल्लीं सबलात्कारं परिणेतुमभियाति ।

सूत्रधारः : मारिष ! कथमिदं संवृत्तमकस्मादेव ?

डिण्डीरकः : (नेपथ्यस्वरमाकर्ण्य)

भाव ! कर्णपथातिथीक्रियतां तावदिदं वृत्तरसायनम् ।

(नेपथ्ये)

भो भो भुजंगपुरनिवासिनः सहृदयसामाजिकाः शृण्वन्तु सर्वेऽत्रभवन्तः यदस्मन्महाराजो वीरभद्रः कलितवकवेषः अंगीकृतकपटमार्जारपराक्रमः परिसरनरेशस्य रौद्रपाणेः शुभाङ्कजायां शृंगारवल्ल्यां समासक्तः सबलात्कारं तां परिणेतुं प्रतिष्ठते !

(श्रुतिमभिनीय)

किमाह सवलात्कारं कथमिति ? अये किन्न जानन्ति भवन्तः यत् असौ रौद्रपाणिः पूर्ववैरमनुसृत्यैव शिरोमुण्डनमन्तरा नास्मन्महाराजाय स्वतनयां प्रदातुं समीहते । तत्सज्जीभवन्तु भवन्तोऽपि सर्वे स्वनरेश-कल्याणपरम्परायै ।

सूत्रधारः : ( सहर्षम् )

मारिष ! सिद्धमस्माकं मनोरथकौतुकम् । तदेहि एतदनन्तरकरणीयाय नेपथ्यगृहमेव प्रविशावः ।

(इति गच्छतः । इति प्रस्तावना)

(राज्यासनोपविष्टः रौद्रपाणिः सभामण्डपमलङ्करोति । सर्वे स्वपक्षीया विपक्षीयाश्च जनाः यथास्थानं समुपविष्टाः सन्ति)

करुणालयः : राजन् रौद्रपाणे ! सोहमस्मि वीरभटालङ्कारस्य प्रचण्डभुजदण्डस्य महाराजश्रीवीरभद्रस्य स्वनामधन्यः सेनापतिः यदभिधानश्रवणमात्रेण वराकोऽसौ वीरभद्रोऽपि पदकन्दुक इव न कदापि स्थिरीभवति । का कथा पुनः युष्मादृशां मशकपुच्छभूतभूपालानाम् ! तद्ब्रूहि कन्यकां दास्यसि न वा ?

रौद्रपाणिः : सेनापते ! शरणागतोऽस्मि !!

(इति वेपमानस्तिष्ठति)

करुणालयः : मा भैषीः राजन् ! करुणालयोऽस्मि ! नाहं तवावमन्ता । शुभचिन्तकोऽस्मि । तद्यदि नायं लगुडाकृतिः भूपालाभिधो वीरभद्रस्तवाभिप्रेतः जामातृत्वेन तर्हि मह्यमेव प्रयच्छ इमां जीवितकाष्ठपुत्तलिकाम् ।

भयानकी : ( अकस्मादेव प्रविश्य सरोषम् )

अरे रे सेनापतिकुलकलङ्क ! पामराधम !! कस्त्वमस्मत्कान्तमनु-कूलयितुम् ? ( इति चरणताडनायोपक्रामति )

करुणालयः : ( भीतस्सन् ) ही ही ही ! क्षन्तव्योऽस्मि चण्डमुण्डविनाशिनि ? रणे नाहं त्वद्भर्तारमनुकूलयिष्यामि साम्प्रतम् ।

( इति पादयोः पतति )

रौद्रपाणिः : ( दुर्वारया गत्या समालिङ्ग्य ) धन्यासि मम करेणो ! अद्य त्वया धरित्र्या भगवान् वराह इव समुद्धृतोऽस्मि पातालगह्वरे ।
( करुणालयं प्रति ) अरे रे नीचजम्बुक ! किन्न जानासि मां भयानकं द्वितीयम्—

गेहेशूरं प्रगल्भं प्रथितगतिमतिं यं समालोक्य नित्यं
भार्याभृत्यादयश्च प्रमुदितहृदितैर्वेपमाना भवन्ति ।
कीटो यो वेशवाक्या निरतिशयपतिनो योऽहितः स्वप्रजायाः
सोऽहं भो रौद्रपाणिनृपतिपतिपतिर्वावदूकोऽस्मि शम्भुः ॥५

तत् त्वमपि कर्णावपिधाय शृणु । नाहं प्रदातुं समीहे स्वप्राणभूतां कन्यकां शृंगारवल्लीं कस्मैचिदपि ।

वीरभद्रः : ( अपटीक्षेपेण प्रविश्य, पादयोर्निपत्य )

हा तात मत्प्रियाजनक ! किमेवं भणसि ? शृङ्गारवल्लीं विना क्षण-मात्रमपि जीवितुं न शक्नोमि । तन्निवर्तय निजवचनकुलिशम् ।

शृङ्गारवल्ली : ( विलपन्ती )

अयि निष्करुण ! जनकहतक !! किमेवं चक्रवाकमिथुनं पृथक्करोषि ? पश्य तात,

नाशं प्रयाति मम यौवनमात्महेतोः
कन्दर्पदर्पमुषितास्मि भृशं हतास्मि ।
अद्यापि केलिकलया स्वयमञ्चितोऽसि
वृद्धा जरच्छबर ! तर्हि कथं त्वयाऽस्मि ॥६

अद्भुतिका : समाश्वसिहि समाश्वसिहि भर्तृदारिके ! अहमपि स्वजनकेन प्रथममुपरुद्धा पश्चाच्च सानन्दं भर्तुरुत्संगे समर्पिताऽभूवम् । तत्पूरयिष्यामि तव मनोरथम् ।

हास्यमुख: : ( वेगपूर्वकमालिङ्ग्य, चिबुकमुन्नमय्य च ) साधु अद्भुतिके साधु ! चिरञ्जीव भद्रे ! मन्मित्रोपकारिणि !! ममापि त्वया सह सङ्गमः स्यात् ।

अद्भुतिका : ( रोमाञ्चमभिनीय )

अये घट एव सागरायते ! क्षणेनैव काचिदन्यास्मि जाता !

मरन्दः पुष्पाणां हितकरकुविन्दः पटवताम्
अनङ्गश्चाङ्गानां मृदुरवमृदङ्गः स्वरवताम् ।
विधुन्वन्प्रत्यङ्गं मनसिजतरङ्गं तरलयन्
अहो कोऽयं स्पर्शो मदयतितरां मां मधुमयः !!७

हास्यमुख: : प्रिये अद्भुतिके ! एष तव मनोरथभूतश्चरणकमलचञ्चरीकायमाणस्तिष्ठति तवालिङ्गनोत्सुको हितकरकुविन्दो हास्यमुखः ! एहि मम कामधेनो !

( अद्भुतिका शृंगारवल्लीमपहाय हास्यमुखं निर्भरं निपीडयति)

भयानकी : ( सतृष्णमवलोक्य )

विषमशर ! किमेवं गलितयौवनामपि मां सन्तापयसि ! निष्ठुर ! यदि नामायं जनस्तवासीत् निलयभूतः कथं तावदकस्मादेव वार्द्धक्यमुपगमितः ? त्वञ्च प्रभो ! नितरां निजवेगं द्विगुणीकरोषि, ग्लपयसि ममाङ्गानि प्रतिदिनम् ! हा किं करोमि मन्दभागिनी !!

( इति पटाञ्चलेन अश्रूणि प्रमृज्य स्थिता )

करुणालय: : ( सहसोपसृत्य )

आः को नाम मनसिजदुर्दुरूटस्त्वां ग्लपयितुं मयि जीवति ! दिवसाभिसारिणि ! एहि निर्भरमालिङ्ग्य मां स्वमनोव्यथामपसारय । पश्य शोभने !

ताराचन्द्रमसोर्बभूव हितकं यद्वाऽञ्जनावातयोः
राधामाधवयोर्बभूव शुभकं यद्वा पृथाऽदित्ययोः ।
तद्भूयात्तदिव प्रकृष्टफलकं ह्यस्माकमप्यान्तरं
शारीरञ्च विभूतिभूतिसुखदं गाढं समालिङ्गनम् !!८

(भयानकी निभृतं परिरम्भपाशं विदधाति)

श्रृंगारवल्ली : ( साकाङ्क्षमवलोक्य वीरभद्रम् )

अरे क्लीब ! एवम्भूतेऽपि निखिलदाम्पत्यसमुदाये कथमेवं जोषमास्यते ? लघुपल्वलमपहाय कुत्र वा क्षुद्रनद्यवतरति । तदेहि मत्पुत्रजनक ! अस्माकमपि हल्लीसको वैदुषीं प्रयातु ।

(वीरभद्रः श्रृंगारवल्लीं स्वाङ्कमधिरोहयति)

रौद्रपाणिः : ( तारस्वरेण विलपन् )

हा दुर्दैव ! किमिदमकाण्डताण्डवं समुपस्थापितं त्वया । हा नात्र संदृश्यते कापि मदालिङ्गनाय ताम्बूलकरङ्कवाहिनी छत्रव्यजनधारिणी वा । अये निष्ठुर कन्दर्प !

वृथा निखिलवैभवं विभवजीवितं जीवितं
वृथापि च समीहितं यदपि चिन्तितं यत्कृतम् ।
वृथा भवति रोदनं हसितमप्यहो प्रायशो
न येन रमणी रमा निखिलशर्मदा ऽऽलिङ्गिता !!९

(इति प्रतीहारीमेव प्रसह्य निर्दयं निपीड्य स्थितः)

(ततः प्रविशति लालाक्लिन्नमुखो विकृतवेषो बीभत्सकः)

बीभत्सकः : ( सर्वानवलोक्य समालिङ्गनपाशबद्धान् )

ही ही ही ही, किमयमास्थानमण्डपः यद्वा श्रेष्ठिचत्वरम् ?
( साश्चर्यम् )

अये ! दृष्ट्वापि मां न कोऽपि प्रचलति न वा परस्परं विरुद्धमाचरति ! तत्कथमहं बाणवर्णितं जाबाल्याश्रमं पुनरवलोकयामि !

( स्वगतम् )

भवतु शब्दापयामि तावत् ।

(तारस्वरेण)

ननु विज्ञापयामि यत् कुलगुरुः अमोघदर्शनः शान्तदर्शनस्समागतो वर्तते ।

[सर्वे ससम्भ्रममुत्तिष्ठन्ति]

( ततः प्रविशति शमस्थायिभावः कलितमुनिवेषः कुलगुरुः शान्तदर्शनः)

शान्तदर्शनः : ( सस्मितम् )

बीभत्सस्य मुखादकालकलहं श्रुत्वा द्वयोश्शिष्ययोः
शृंगाराद्भुतहास्यभीतिकरुणैस्संसक्तयोस्तत्क्षणम् ।
आत्मारामतया स्थितो भुवि सदा योऽसौ समत्वाञ्चितः
शान्तस्सोऽहमिहागतोऽस्मि झटिति प्रालेयशीतानिलः !!१०

(बाहू उद्यम्य)

विजयतां परस्परसम्बन्धबन्धनेन मम शिष्ययुगली !

वीरभद्रः :
रौद्रपाणिः : } भगवन् अभिवादये !

शान्तदर्शनः : वत्स वीरभद्र ! वत्स रौद्रपाणे ! ममैव स्वभावे युवयोः पर्यवसानम् । यत्किञ्चिदपि विरोधाङ्कुरसूत्रमापाततः संदृश्यते युवयोस्स्वभावयोस्तत्तु स्थूलमकिञ्चित्करञ्च । तत् वत्सरौद्रपाणे ! मद्वचनमनुसृत्य प्रयच्छ स्वकन्यकां शृंगारवल्लीं वीरभद्राय !

रौद्रपाणिः : यदाज्ञापयन्ति कुलगुरुचरणाः [ इति कन्यकायाः पाणी वीरभद्रं ग्राहयति ]

( हास्यमुखोऽद्भुतिकां सस्पृहं विलोकयति )

शान्तदर्शनः : वत्स हास्यमुख ! त्वमपि मद्वचनात् अद्भुतिकायाः पाणी गृहाण !

( हास्यमुखस्तथा करोति )

(वीरभद्राभिमुखीभूय)

वत्स वीरभद्र ! किं ते भूयः प्रियमुपकरोमि ?

वीरभद्रः : भगवन् किमपरं विद्यते न्यूनं ममाशापूरणाय । तथापीदमस्तु भरतवाक्यम् !

संश्रूयन्ते घनौघप्रशिथिलगगने यावदाकाशगंगाः
वर्णाश्चेन्द्रायुधीयाश्शतशतशकला यावदाभान्ति लोके !
यावच्चास्ते सुमेरोरवितथकलना क्वापि हृद्यानवद्या
वाणी वृन्दारकाणां वितरतु नितरामाशिषं तावदित्थम् !!११

( जवनिकापातः )



# क चा भि शा प म्

## पात्रपरिचयः



सूत्रधारः (उद्घोषकः)

कचकुमारः (देवगुरुबृहस्पतिपुत्रः)

शुक्राचार्यः (दैत्यकुलगुरुः)

नटी (सूत्रधारसहचरी)

देवयानी (शुक्रतनयाकचप्रणयिनी)

जयमाला (देवयान्यास्सहचरी)

रचनाकालः १९७० ई०]

देवासुर-संग्राम में मृत असुरों को दैत्यगुरु शुक्राचार्य सञ्चीवनी-विद्या के बल से पुनर्जीवित कर देते थे। यह अद्भुत कौशल देख कर देवराज इन्द्र ने गुरु बृहस्पति से भी कुछ प्रयास करने की प्रार्थना की। देवगुरु ने अपने एकमात्र पुत्र कुमार कच को शुक्राचार्य की सेवा में भेज दिया ताकि वह उस विद्या को सीख सके।

कुमार कच बारह वर्ष तक महर्षि शुक्र के आश्रम में रहा और सञ्जीवनी-विद्या के सैद्धान्तिक ज्ञान एवं प्रयोग में पूर्ण विचक्षण भी हो गया। परन्तु इसी बीच प्रमादी असुरों को ज्ञात हो गया कि वह बृहस्पतिपुत्र है। फलतः वे आयेदिन कच को परेशान करने लगे। कई बार उन्होंने उसे निर्जीव भी कर दिया परन्तु शुक्र ने पुनः उसे जीवनदान दिया।

वह भी दिन आया जब प्रसन्नमन शुक्राचार्य ने कच को अपने घर जाने की आज्ञा दे दी। इधर उनकी एकमात्र अनिन्द्यसुन्दरी कन्या देवयानी कच को मन ही मन अपना प्रियतम मान बैठी। विदावेला में देवयानी ने पूर्ण समर्पणभावना से अपने प्रेम की भीख माँगी और कच से स्वयं को भी अमरावतीपुरी ले चलने की अभ्यर्थना की। परन्तु कच इस अप्रत्याशित प्रस्ताव से चौंक गया क्योंकि वह देवयानी को गुरुपुत्री होने के कारण अपनी भगिनी ही मानता था।

दोनों के पारस्परिक वार्तालाप ने विवाद का और अन्ततः मरणान्तक वैर का स्वरूप धारण कर लिया जिसका पर्यवसान अत्यन्त दुखद हुआ। देवयानी ने कच को शाप दिया कि सञ्जीवनी विद्या उसके हाथ से कभी फलवती न हो और कच ने देवयानी को शाप दिया कि भविष्य में कोई भी ब्राह्मणकुमार उसे पत्नीरूप में न ग्रहण करे।

# कचाभिशापम्

आकाशाभा दिगाभा त्रितयभुवनभाः पार्वणाभा मुदाभा
कारुण्याभा कृपाभा विजयशमनभा मानसाभा मुखाभा !
देदीप्यन्ते यदाभाममृतलहरिकां प्राप्य नित्यं प्रकामम्
दिव्याभं तं नमामः कमपि नटवरं कान्तवृन्दावनेशम् ॥१

अपि च

गच्छ त्वं काक ! कान्तं मधुपुररमणीस्नेहसन्दोहदोलं
दोलादोलायमानं विरहितनिजकं माधवं ब्रूहि भव्यम् ।
चञ्चुं चामीकराढ्यं वदनपुटमपि क्षीरपूरं करिष्ये
इत्येवं सन्दिशन्त्याः विकसितकरुणा वोऽवताद्राधिकायाः ॥२

(इति पुष्पाञ्जलिं विकीर्य)

सूत्रधारः : तदहं भोः समायातोऽस्मि रङ्गमञ्चोपरि भवताम्मनोविनोदाय किमपि नूतनं नाटकमवतारयितुम् ।

(श्रुतिमभिनीय सस्मितम्) किमुच्यते ? क्वाधुना वृन्दारकवाग्वाङ्मयेऽभिनेयकाव्यप्रणयनम् इति ! हन्त भोः कुतोऽयं सम्प्रविष्टो विषकीटो भवतां बुद्धिरन्ध्रेषु ?

नटी : (प्रविश्य अपटीक्षेपेण)

आर्य ! श्रीराजेन्द्रमिश्रविरचितमभिनवनाटकमद्यैतावङ्कमुपस्थापयितुमस्मान् समाज्ञाप्यापि सयत्नं किमिदानीमनवसरविलम्बविडम्बनं क्रियते ?

सूत्रधारः : (स्मृत्वा सहासम्)

प्रिये ! अस्मादेवास्मि ते कोपभाजनम् । सत्यमेव मया सुविस्मृता पूर्वनिश्चितसरणिः ।

(दर्शकान् प्रति) तद्भोः प्रायागीयसामाजिकाः साम्प्रतमेव पश्यन्तु भवन्तः स्वकीयं सन्देहमूलं समूलमुन्मूल्यमानम् !

नटी : आर्य ! कथं न दीयतेऽभिनवकविपरिचयः ?

सूत्रधारः : मा भैषीः प्रिये ! एवमकृत्वा पदमेकमपि प्रचलितुं नोत्सहे ! ( जनान्तिकम् ) त्वं तावन्नेपथ्यगृहं प्रविश्य नाट्यावतारणनिपुणं मधुरसङ्गीतकं विरचय । अहमपि स्वनियोगमनुष्ठास्यामि !

(नटी सविलासमपक्रामति)

सूत्रधारः : (कतिचित् पदानि गत्वा)

तदिदमुपस्थाप्यतेऽस्माभिर्नूतनं लघुनाटकं कचशापाभिधानम् !

(तारस्वरेण)

यत्सीत्कारोऽम्बिकायास्तरलितमतिकश्चापि हारोऽङ्गनायाः
प्राकारः काव्यपुर्यास्सुललितगलकश्चेन्दुकुन्दप्रमोदः !
बद्धाः काव्यप्रबन्धा विविधरसयुताः स्वल्पकाले हि येन
तस्यैव प्राञ्जलाङ्कं प्रणयनकुसुमं दीयतेऽस्माभिरद्य ।।३

अपि च

विद्याराज्ञाः प्रतापादनवरतसुखं यो विधत्ते रसायाः
कान्तश्चेन्दोस्सभेयः कृतनयनरतिश्चापि राजीवधर्मा !
वानीराणां विलासो व्यवहृतिसरणौ सुत्परीतात्मबन्धु-
स्तस्यैव प्राञ्जलाङ्कं प्रणयनकुसुमं दीयतेऽस्माभिरद्य ।।४

अयि सरसनाट्यदर्शनरसिकाः सहृदयबन्धवः सोऽयं गोरक्षपुरीयरापतपुरभभयाग्रामस्थगौतमगोत्रीयद्विजान्वयोत्पन्नः दिवङ्गतानां सुगृहीतनामधेयानां श्रीदुर्गाप्रसादशर्मणामात्मजः देव्या चाभिराज्या स्वजनन्योपलालितः पितृव्यप्रवरश्रीमदाद्याप्रसादमिश्रसरणिरेणुपरिपूतान्तरः जौनपुरमण्डलान्तर्गतद्रोणीपुरग्रामत्रास्तव्यः साम्प्रतञ्च प्रयागविश्वविद्या-

लयीये संस्कृतविभागे प्रवक्तृपदमलङ्कुर्वाणः सप्तविंशतिवर्षदेशीयो युवाकविः मिश्रोपाह्वो राजेन्द्रो यस्येदं पञ्चमं लघुनाटकरूपारमाभिस्समुपायनीक्रियते कचशापं नाम !

(साश्चर्यम्) कथं प्रवृत्तमेव नेपथ्यसङ्गीतकम् ? तदहमपि अनन्तरकरणीयाय सज्जीभवामि

(इति निष्क्रान्तः । इति प्रस्तावना)

( प्रथमं दृश्यम् )

नगरपरिसरारण्ये महर्षेः शुक्राचार्यस्याश्रमो दृश्यते । वन्यधान्यं संस्कुर्वती मुनितनया षोडशवर्षदेशीया देवयानी मनस्येव किञ्चिदस्फुटं गायन्ती तिष्ठति ।

( नेपथ्ये )

रजनिरियं सहकृतघनमाला वदति न जलदमयूरः
वद सखि ! किं सम्प्रति करणीयं प्रियनिष्ठुरोऽतिदूरः !!
कलितकौमुदी प्राङ्गणदीप्ता तदपि न तिमिरो यातः
सौदामिनी प्रतिपलं पीता तदपि न घनोऽवदातः !!
नयनं नानुगतं मम सखि हे प्रवहति ननु जलपूरः
अनिशमशरणां दहति विकलमति मामिह मनसिजशूरः ॥५

देवयानी : (श्रुत्वा, गीतार्थमनुभवन्ती च स्वगतं सस्पृहम् )

अये कुतोऽयं मधुरो गीतध्वनिः ? 'प्रियनिष्ठुरोऽतिदूरः' हन्त ! कियन्तो मधुराः हृदयस्पर्शिणश्चेमे शब्दाः ! ( किञ्चिद् विचिन्त्य ) किन्तु पवित्रेऽस्मिन्नाश्रमे तु ईदृगुन्मादिनी गीतधारा न कदाचिदुदिताऽसीत्पूर्वम् ?···तत्पुनः स्वयमेव वनदेवतया किमद्य कोऽपि महोत्सवः समायोजितः ? यद्वा गहनकान्तारे दारुणतपोनिरतं कमपि समाधिस्थितं महर्षिं प्रतिकूलयितुं शचीनाथेनैव मेनकोर्वशी वा प्रहिता वर्तते ?

(ससम्भ्रमम्) जयमाले ! क्वासि ?

जयमाला : सखि ! इयमागताऽस्मि ।

(वेपथुमतीं देवयानीं निपुणं निरीक्ष्य ) अये ! किङ्कृतोऽयं सम्भ्रमः ? किमायुष्मान् कचोऽमरावतीं प्रतिष्ठासुर्वर्तते ( सकुटिलस्मितम् ) उचितमप्यस्ति । नन्विमां प्रणयलीलां कियत्कालं तिरोधत्तुं समीहसे ? पश्य,

मृगवधूसदृशं नयनद्वयं ननु विधूपमकं वदनाम्बुजम् !
समुचितं सखि सम्प्रति शोभते सुकृतिने ह्यनयोरसुसमर्पणम् ।।६

देवयानी : ( साट्टहासम् )

जये ! परिहसामि त्वन्नर्मवचनम् । सविशेषमेव मयाऽकारितासि । किन्तु साम्प्रतं त्वया सुरसिकया क्वचिदन्यत्रैव नीताऽस्मि । मुञ्च तावत्तदकाण्डप्रथनम् ।

( स्कन्धोपरि हस्तं निवेश्य )

सखि ! निपुणं जानीहि, कुतोऽयमद्भुतगीतध्वनिः प्रसरति ?

( नेपथ्ये पुनश्श्रूयते )

नक्तन्दिवमेकाकिन्यस्मि द्वारं परमविशालम्
नैव मनागपि कान्तं जाने यतिकं वा भूपालम् !!
प्रथमसमागममेव विचिन्त्य स्पन्दत्यनुगतोऽङ्कूरः
आत्मायं वेपते निकामं प्रभवति मनसिजशूरः ।।७

देवयानी : ( सरणरणकम् )

जये ! किन्न श्रुतं त्वया ? भावनेयं कियन् मर्मस्पर्शिनी ? परन्तु कोऽसौ जनः गीतिमिमां गायति, क्व गायति, किमर्थं वा गायति ? सखि ! न जाने कथमिमां गीतिमाकर्ण्य हृत्तन्त्रिका मे झङ्कर्तुं प्रवृत्ता…" रोमोत्कम्पश्च जायते ।

(जयमालायाः करतलमागृह्य) हृदयस्पन्दनं तावन्ममाकलय !

जयमाला : (साश्वासनम्)

अयि मुग्धे ! एतावतैव कथं वैक्लव्यमनुभवसि ? सखि ! गीतमिदमनुगीयते दैत्याधिपतेर्वृषपर्वणः अवरोधगृहवधूभिः । ( सोल्लुण्ठम् ) यतःप्रभृति महाराजेन अमरावतीपुरी प्रसह्य वशीकृता ततः प्रभृत्येव राजधान्याम् आमोदप्रमोदपरम्परा निरन्तरमुज्जृम्भते । किञ्चाद्य······ ( साबाधम् ) न जानासि त्वं देवयानि ! अद्य किल दुरभिमानिनस्तस्य नरपतेर्दुर्ललितकन्यकायाः शर्मिष्ठायाः जन्मदिनमपि वरीवर्ति ।

देवयानी : किमुदितं त्वया ? शर्मिष्ठायाः जन्मदिनमद्यास्ते ! सैव शर्मिष्ठा यया भिक्षुपुत्रिकेति भृशमुपहसितास्मि ।

( साधरविकम्पनम् ) हुंः ममैव जनकस्य यज्ञबलेन स्थिरीकृतमिदं दैत्यसाम्राज्यम् । तस्मिन्नेव च साम्राज्ये ममेदमवमाननम् ? पश्य जये ! साम्प्रतं पुरन्दरोऽसौ समुच्छिन्नः । महाराज्ञी शची च अनाथा संवृत्ता । नन्दनवनमनन्दनीभूतम् । ऐरावतसुरभ्युच्चैःश्रवसश्च पारवश्याश्रूणि नितरामवमुञ्चन्ति ।

जयमाला : सखि ! निखिलविपदेकमूलं त्वज्जनक एव । तेनैव विद्यया सञ्जीवन्याऽऽयाचितवैभवमुपायनीकृतं दैत्येभ्यः यदभिमानेनोन्मादिनी सा दैत्यपुत्रिका शर्मिष्ठा त्वामनिशमुपहसति ।

देवयानी : (अश्रूणि प्रमृज्य)

जये ! किं करोमि मन्दभागिनी । पश्य,

यद्भव्याय प्रलीनं निखिलमपि निजस्वार्थतन्त्रं पितुर्मे
तत्कन्या कर्कशा मामुपहसतितरां सावहेलं सदर्पम् ।
चित्तेनात्तश्च कान्तो जनकरिपुसुतस्तोप्युदात्तः कचाख्यः
दत्तं प्रातीप्यमेव प्रचितविरतिजं मह्यमेवं विधात्रा ॥८

(इति रोदिति)

जयमाला : ( प्रगाढमालिङ्ग्य सस्नेहम् ) मा रोदिहि मुग्धे ! शृणु तावन्मद्वचनम् ।

देवयानी : जये ! किं शृणोमि त्वद्वचनम् । निर्दयं दहन्ति मामसहायां राक्षस्यास्तस्या ईर्ष्यालवोऽट्टहासाः । किञ्च, अत्याहितं मया सन्दृष्टमद्य

स्वप्नविधौ यथा खल्वहं व्याघ्रेण व्यापाद्यमाना रक्षणार्थमभिक्रोशामि। पापिनी च शर्मिष्ठा कचेन साधं दोलासुखमनुभवन्ती मद्रक्षणायागन्तु-काममपि तं भुजाभ्यां श्रृङ्खलयति मामुपहसति च।

( सफूत्कारम् )

पापिनि शर्मिष्ठे ! दुष्टराक्षसि !! पश्यामि त्वाम्......मत्प्राणप्रियं कचं मत्तोऽप्याहर्तुं न प्रभवसि, न प्रभवसि। (इति मूर्च्छति)

( यज्ञशालातो महर्षेः शुक्रस्य स्वरोऽनुश्रूयते )

देवयानि ! क्वासि ?

( उत्तरमनवगत्य )

पुत्रिके ! किन्न श्रुतं त्वया ? अयमहं त्वामाह्वयामि। जयमाले !!

जयमाला : हाधिक्। न जाने किं निमित्तं तातोऽनुस्मरति। सखी चात्र मूर्च्छिता वर्तते। किं कथयिष्यामि ?

(शनैर्देवयानीमङ्कादवतारयति। यज्ञशालातः पुनश्श्रूयते सक्रोधम् )

देवयानि ! जयमाले !! क्वापहृताः यूयम् ?

जयमाला : ( सत्वरमुपसृत्य, सविनयम् ) तात ! इयमागतास्मि !

शुक्राचार्यः : (कचमङ्कपाल्या प्रगृह्याग्रेसरति)

जये ! अनुज्ञातो मया कचोऽमरावतीं प्रतिनिर्वर्तितुम्। विद्यार्जन-विधिश्चास्य पारङ्गतः। तत् शीघ्रमेव सम्पादय प्रस्थानकौतुकमस्य।

जयमाला : ( सावेगम् )

तात ! किमद्यैव कुमारोऽमरपुरीं गच्छति !

शुक्राचार्यः : अथ किम् ! प्रीतोऽस्मि कचसेवया गुरुनिष्ठया च तस्य।

( कचमालिङ्ग्य ) पुत्रक ! संयोजयामि त्वामाशिषां नियुतप्रयुतेन। विद्येयं सञ्जीवनी त्वदनुचरी भूयात् ! त्वञ्चापि शतायुर्भूयाः।

(स्नेहेन गद्गदीभूय)

ॐ सह नाववतु, सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै !!

कचकुमारः : ( शिरसा प्रणम्य ) गुरुदेव ! कृतकृत्योऽस्मि साम्प्रतमेभिरमोघवचनैः । तात ! अकिञ्चनोऽस्मि गुरुदक्षिणाविधौ ।

(पुनश्चरणयोर्निपतति)

( द्वितीयं दृश्यम् )

कचकुमारः : ( पर्णशालाभ्यन्तरे सोद्वेगं पर्यटन् )

हन्त भोः !

योगक्षेमकरीं पुरन्दरपुरीं दृङ्नन्दनं नन्दनं
मन्दारक्षुपमेदुरञ्च पुलिनं गाङ्गं लसद्वारिजम् !
तत्सर्वाण्यपहाय हन्त ! यदिदं सञ्जीवनीजीवनं
कल्याणाय दिवौकसां नु कलितं स्थानं तदप्युज्झितम् ।।९

(पुरतोऽवलोक्य)

अये देवयान्याः सहचारिणी जयमाला इत एवाभिवर्तते !

(अश्रूणि वल्कलान्तेन प्रमृज्य स्थितः)

जयमाला : (पार्श्वमागत्य)

कुमार ! किमेवमात्मानं पीडयसि ?

कचकुमारः : जये ! किमुच्यते त्वया किमेवमात्मानं पीडयामीति ? ननु पश्य,

त्रुटितसरससूत्रं कूपगर्भे निमग्नं
भवति सलिलपात्रं यद्वदेव प्रकामम् ।
अयमपि तव बन्धुस्तद्वदेव प्रभिन्नो
गणयति निजभाग्यं जीर्णजीर्णं विशीर्णम् ।।१०

जयमाला : कुमार ! जानामि तव वियोगदुःखम् । तथाप्यस्ति मे किञ्चिद्-वाचिकम् !!

त्वं तावद्व्रतिनामुदग्रतपसां वंशेऽसि जातस्सुधीः
आयुष्यं समलङ्करोषि तरुणं लोकत्रयञ्चेशसे !
एवं सत्यपि ताम्यसि प्रविकलं चेत्त्वं वियोगाग्निना
किं वृत्तं भविता तदा लघुदृशामस्मादृशां चिन्तय ॥११

कचकुमारः : जये ! अवितथमुच्यते त्वया । तथापि स्मारं स्मारं गुरुचरणानां सहजवात्सल्यं युवयोश्च स्नेहमकैतवम् एवंविधोऽस्मि संवृत्तः । तदितः प्रस्थाय,

दृष्ट्वा मृगाङ्कवदनं वदनाम्बुजानि
इन्द्रायुधं समवलोक्य वनान्तराणि !
वृन्दारकेषु निवसन्नपि संस्मरामि
आरण्यकं निखिलमेव सुवृत्तजातम् ॥१२

(अकस्मादेव देवयानी समुपसृत्य कुमारं कचं निर्भरं निपीड्य विलपन्ती स्थिता)

देवयानी : (सानुरागनयनम्)

कच ! उटजाभ्यन्तरीभूय सर्वमेव मया श्रुतम् । त्वमद्य मामेकाकिनीमपहाय स्वगृहं प्रस्थितोऽसि ?

कचकुमारः : (समुपलालयन्)

भगिनिके देवयानि ! अलमतिरुदितेन ! त्यज शोकं धैर्यमवलम्बस्व । पश्य तावत्,

अविरतचिन्तनमूलः परिमलसरणिश्च नीरदारम्भः ।
भवति परिचयस्नेहोऽनियमितगतिकश्च वृत्तान्तः ॥१३

देवयानी : कुमार ! नाहं त्वया भगिनीसम्बोधनेनैवं न्यक्करणीया । चिरकालादेव मया हृन्मन्दिरे कान्तभावेनैव प्रतिष्ठापितोऽसि । पश्य तावत्,

स्वप्ने जागरणे वितर्कजनितप्राक्कल्पने जल्पने
गानेऽकारणरोदने प्रहसने सन्नर्तनावर्तने ।
सर्वं बन्धुजनं विहाय निखिलं स्वार्थं खिलीकृत्य च
त्वामेकं नितरामुपासितवती प्राणेश्वराकाङ्क्षया ॥१४

कचकुमारः : ( सोद्वेगं देवयानीं पृथक्कुर्वन् )

देवयानि ! किमिदमनार्यमाचरितं त्वया ? गुरुपुत्रिकेति सन्ततमेव मया भगिनिकाभावेन संदृष्टोरीकृता चासि । एवं हि,

कीर्तिं हरामि जनकस्य दिगन्तगन्त्रीं
धर्मं सनातनमुत प्रथितं जहामि ।
आत्मानमेव गलितं पतितं करोमि
त्वां देवयानि ! यदि दारपदं नयामि ॥१५

देवयानी : ( सानुनयम् )

कुमार ! कोऽयन्ते प्राकृतजनानुरूपो व्यामोहः ? अहमस्मि तवानन्यप्रणयिनी ! शपेऽहं प्राणैर्यदि स्वप्नेऽपि त्वदन्यं कमपि जनं चिन्तितवती । अपरञ्च,

भार्गववंशे जननं त्रिलोकपूज्येऽनवद्यरूपाहम् ।
सत्यपि गुरोस्तनूजा परिणययोग्या परम्परया ॥१६

कचकुमारः : ( मुखं परावृत्य )

देवयानि ! अलमनया कलङ्ककथया ! अहमेवास्मि मूढबुद्धिर्यः खलु द्वादशवर्षपर्यन्तं गुरुसदनमध्युष्यापि तत्सुतां त्वां तत्त्वतोऽवगन्तुं न शशाक !! त्वां हि तावत्, कथं लिट् प्रयोगः?

मनसिजपरितापाद्रूपमोहात्प्रमादात्
सहजयुवतिभावात्साहचर्यादुताहो ।
कथमपि परिपूतं धर्मचित्तं सुवृत्तं
जनमिममघकूपे पातयन्तीं विशङ्के ॥१७

देवयानी : ( सक्रोधम् )

कच ! पाषाणमूर्तिं त्वां जीवितं मन्यमानया मयैवात्मनोऽत्याहितम् । ( अश्रूणि मुञ्चन्ती ) क्लीब ! पुरुषार्थविहीनानां सर्वत्रैव मिथ्याधर्मबन्धनं भवति । एवं हि नाम त्वया त्वदेकप्रणयिनी प्रमादिनीवोपकल्पिता ?

तदवश्यमेव निर्दोषललनापमानकुफलं त्वया मूढेन भोक्तव्यम् ! गच्छ,

विद्या याधिगता त्वयेह वसता सञ्जीवनी मत्पितु-
र्यद्गर्वेण विमानिता च तनया तस्यैव निष्कल्मषा ।
त्वत्पादाम्बुजसेवनं यदि कृतं नित्यं मया निष्ठया
तरसा स्याद्विफलापकीर्तिजननी शापप्रभावान्मम ॥१८

कचकुमारः : ( सरोषं बाहू उद्यम्य )

आत्मवंशकलङ्किनि ! कन्दर्पदर्पदलितया त्वया धर्मप्रतिष्ठापि नोररीकृता ? तदहमपि तव दुराचरणस्य समुचितं फलं तुभ्यं समुपायनीकरिष्यामि । धर्माचरणनिरतस्यापि सद्वृत्तस्य ब्राह्मणकुमारस्य मम द्वादशहायनानां सुरद्रुमोपमम् अमोघं विद्यार्जनं यस्मात्त्वया विफलीकृतं तस्मात्,

यावन्तस्सन्ति लोके त्रितयपरिमिते ब्राह्मणानां सुवंशाः
धैर्यप्राणास्तपोभिर्विकलितविबुधाश्चापि सत्यैकनिष्ठाः ।
तेषामेकोऽपि पाणी क्वचिदपि किल ते न ग्रहीष्यत्यथातो
मच्छापोऽयं करालः प्रभवतु नितरां देवयानि ! त्वदर्थम् ॥१९

( इति सफूत्कारं दुर्वारया गत्या प्रस्थितः )

( आकाशेऽनुश्रूयते )

पूतप्रणयनिष्ठत्वं देवयान्याः महीयते
यद्वा धर्मः कचस्येति देवानामपि संशयः ॥२०

सेयं शुक्रतनया देवयानी भाविनिकाले चन्द्रवंशावतंसस्य क्षत्रियनरपतेर्ययातेर्नहुषनन्दनस्य साम्राज्ञी भविष्यति । ऋषिकुमारशापप्रभावा प्रतिलोमस्सन्नपि विवाहोऽयं लोकमङ्गलकरः इति विधेर्विधानम् । अथ बृहस्पतिनन्दनोऽपि इतः प्रस्थाय—

अमरावतीमुपगम्य पितरं नन्दयन्सपुरन्दरम्
सञ्जीवनीं दत्वेतरेभ्यश्चरन्नपि मङ्गलकरम् ।
निखिलं विबुधनिकुरम्बकं परितोषयिष्यति पुष्कलम्
सद्धर्मिणामग्रेसरस्सम्प्राप्स्यति प्रथितं फलम् ॥२१

( जवनिकापातः )

# श्लोकानुक्रमणिका

# अभिराजसाहित्यम्

## □ प्रकाशितसंस्कृतकृतयः

| | | |
|---|---|---|
| १. नाट्यपञ्चगव्यम् (शासनपुरस्कृतम्) | मूल्यम् | १५/= |
| २. अकिञ्चनकाञ्चनम् (शासनपुरस्कृतम्) | ,, | १०/= |
| ३. नाट्यपञ्चामृतम् (एकाङ्किसंकलनम्) | ,, | २०/= |
| ४. चतुष्पथीयम् (एकाङ्किसंकलनम्) | ,, | १५/= |
| ५. प्रमद्वरानाटिका (केन्द्रशासनार्थप्रकाशितम्) | ,, | ...... |
| ६. आर्यान्योक्तिशतकम् (शासनपुरस्कृतम्) | ,, | १५/= |
| ७. नवाष्टकमालिका (शासनपुरस्कृता) | ,, | १०/= |
| ८. पराम्बाशतकम् (पराम्बास्तवनम्) | ,, | १०/= |
| ९. वाग्वधूटी (पुरस्कृतशीतसंकलनम्) | ,, | २२/= |
| १०. जानकीजीवनम् (महाकाव्यम्) | ,, | २५/= |
| ११. मृद्वीका (अभिनवगीतिकाः) | ,, | २५/= |
| १२. इक्षुगन्धा (कथासंकलनम्) | ,, | १५/= |

## □ प्रकाशितहिन्दीकृतयः

| | | |
|---|---|---|
| १३. वेदना (खण्डकाव्य) | ,, | ८/= |
| १४. पनघट (खण्डकाव्य) | ,, | ५/= |
| १५. मुक्तिदूत (हाई० कक्षाओं के पाठ्यक्रम में निर्धारित) | ,, | १/५० |
| १६. पूर्णकाम (खण्डकाव्य, भरत पर आधारित) | ,, | ७/= |
| १७. गृहत्याग (खण्डकाव्य, बुद्ध पर आधारित) | ,, | ७/= |
| १८. मुक्तधारा (काव्यसंग्रह) | ,, | ५/= |
| १९. दो पांत नींबू : तीन पात अमोला (काव्यसंग्रह) | ,, | २०/= |
| २०. सपनों में डूब गया मन ! (काव्यसंग्रह) | ,, | २०/= |
| २१. पलकों के बन्द द्वार ! (काव्यसंग्रह) | ,, | २०/= |
| २२. अदृश्यन्ती (सम्पूर्ण नाटक) | ,, | ...... |
| २३. विधवा (आञ्चलिक उपन्यास) | ,, | ५/= |
| २४. बच्चों के पाहुन (बाल पद्यकथायें) | ,, | ३/= |
| २५. पढ़ो और बनो (बाल गद्यकथायें) | ,, | ३/= |
| २६. नया विहान (बाल एकाङ्की) | ,, | ३/७५ |

२७. वन के गीत : मन के मीत (बाल पद्यकथायें) ,, ३/७५
२८. तितली के पंख (बाल कवितायें) ,, ५/२०
२९. महाभारत की किशोरकथायें ,, ५/७५

☐ प्रकाशितपाठ्यग्रन्थाः

३०. कादम्बरीकथामुखम् ,, १०/=
३१. किरातार्जुनीयम् (प्रथमसर्गः) ,, १०/=
३२. छन्दोऽलङ्कारसौरभम् ,, १०/=

☐ प्रकाश्यमाणसंस्कृतहिन्दीकृतयः

१. वामनावतरणम् ( षोडशसर्गात्मकं महाकाव्यम् )
२. चौरशतकम् (प्रणयकाव्यम् )
३. अभिराजशतकम् (स्वानुभूतिसंकलनम् )
४. अभिराजत्रिशती (नव्यभारतमातृप्रभातमङ्गलशतकानि)
५. धर्मानन्दचरितम् (स्वामिधर्मानन्दाश्रितं काव्यम् )
६. काव्यतरङ्गिणी (३५ सर्गमितो वाङ्मयेतिहासोऽपूर्णः)
७. गन्धमादन (राष्ट्रीय कविता-संग्रह)
८. पाषाणी (अहल्या पर आधारित काव्य, पञ्चसर्गात्मक)
९. लोकोक्तिवैतरणी (लगभग २००० लोकोक्तियों का संग्रह)
१०. संस्कृत—लोकभाषा—कोश ।
११. बदरा भइल मोरा दूत ! (भोजपुरी मेघदूत)
१२. बिरहा कऽरैन (खण्डकाव्य)
१३. सकुन्तला (९ सर्गों का भोजपुरी महाकाव्य, अपूर्ण)
१४. फगुनी बयार (काव्यसंग्रह)

व्यवस्थापक/प्रकाशक

**वैजयन्त प्रकाशन**

८ बाघम्बरी मार्ग, इलाहाबाद ।



## अभिराज डॉ० राजेन्द्र मिश्र

- पौष कृष्ण पञ्चमी संवत् १९९९ (२६ दिसम्बर ४२ ई०)
- पार्वतीपरमेश्वरौ: अभिराजी देवी मिश्रा / पं० दुर्गाप्रसाद जी मिश्र
- सम्प्रति इलाहाबाद विश्वविद्यालय के संस्कृत-विभाग में अध्यापनकार्यरत।

### पूर्वप्रकाशन : हिन्दी

खण्डकाव्य : वेदना, पनघट, पूर्णकाम, गृहत्याग मुक्तिदूत (हाईस्कूल कक्षा के पाठ्यक्रम में निर्धारित)।

काव्यसंग्रह : मुक्तधारा, दो पात नींबू : तीन पात अमोला, सपनो में डूब गया मन ! पलकों के बन्द द्वार (यंत्रस्थ)।

बालसाहित्य : बच्चों के पाहुन, पढो और बनो, वन के गीत–मन के मीत, नयाविहान, तितली के पंख, महाभारत की किशोरकथायें।

उपन्यास : विधवा (आञ्चलिक)

### संस्कृतरचनायें :

दृश्यकाव्य : नाट्यपञ्चगव्यम्, अकिञ्चनकाञ्चनम्, नाट्यपञ्चामृतम्, चतुष्पथीयम्, प्रमद्वरा (नाटिका)।

श्रव्यकाव्य : आर्यान्योक्तिशतकम्, नवाष्टकमालिका, वाग्वधूटी (काव्यसंकलम्) जानकीजीवनम् अभिराजत्रिशती (यंत्रस्था) मृद्वीका (यंत्रस्

पाठ्यग्रंथ : किरातार्जुनीयम्, छन्दोऽलङ्कारसौरभम्, काद

वैजयन्त प्रकाशन, ८ ... रोड, इलाहा